* श्रीः *

# यज्ञमधुसूदनः

यज्ञविद्याप्रकाशकोऽयमपूर्वो ग्रन्थः ।
विद्यावाचस्पतिश्रीमन्मधुसूदनसूरिणा ।
प्रणीतः प्रथतामेष श्रीयज्ञमधुसूदनः ॥

जयपुरराजकीयविद्वन्मण्डलसभाप्रधानपण्डितेन महामहोपदेशकेन
समीक्षाचक्रवर्तिना श्रीमधुसूदन–विद्यावाचस्पतिना
मैथिलेन प्रणीतस्य यज्ञमधुसूदनग्रन्थस्यायं
द्वितीय–परिच्छेदरूपः–

## स्मार्तकुण्डसमीक्षाध्यायः

वैदिकसनातनधर्मधुरन्धरस्य जयपुरशेखावाटीप्रान्तस्थमलसी-
सरप्रदेशाध्यक्षस्य ठाकुरसाहबश्रीभूरसिंहजीमहोदयस्य
सुयोग्यपुत्रेण माननीयकुँवरसाहब–श्रीशिवनाथ-
सिंहजीमहोदयेन वैदिकजनानामुपकारार्थं
निजद्रव्येण संपूर्णमुद्रणव्ययसाहाय्यभारं
गृहीत्वा धर्म्मबुद्ध्या मुद्रापितः ।

सोऽयं श्रीमथुराप्रसादशिवहरेप्रबन्धेन, अजमेरनगरे
वैदिकप्रेसनाम्नि मुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितः ॥

प्रथमावृत्तिः १००० | सन् १९२८ ई० | मूल्यम् १)

* श्रीः *

# यज्ञमधुसूदनः

यज्ञविद्याप्रकाशकोऽयमपूर्वो ग्रन्थः ।
विद्यावाचस्पतिश्रीमन्मधुसूदनसूरिणा ।
प्रणीतः प्रथतामेष श्रीयज्ञमधुसूदनः ॥

जयपुरराजकीयविद्वन्मण्डलसभाप्रधानपण्डितेन महामहोपदेशकेन
समीक्षाचक्रवर्तिना श्रीमधुसूदन-विद्यावाचस्पतिना
मैथिलेन प्रणीतस्य यज्ञमधुसूदनग्रन्थस्यायं
द्वितीय-परिच्छेदरूपः—

## स्मार्तकुण्डसमीक्षाध्यायः

वैदिकसनातनधर्मधुरन्धरस्य जयपुरशेखावटीप्रान्तस्थमलसी-
सरप्रदेशाध्यक्षस्य ठाकुरसाहबश्रीभूरसिंहजीमहोदयस्य
सुयोग्यपुत्रेण माननीयकुँवरसाहब-श्रीशिवनाथ-
सिंहजीमहोदयेन वैदिकजनानामुपकारार्थं
निजद्रव्येण संपूर्णमुद्रणव्ययसाहाय्यभारं
गृहीत्वा धर्म्मबुद्ध्या मुद्रापितः ।

सोऽयं श्रीमथुराप्रसादशिवहरेप्रबन्धेन, अजमेरनगरे
वैदिकप्रेसनाम्नि मुद्रणयन्त्रालये
मुद्रयित्वा प्रकाशितः ॥

प्रथमावृत्तिः १००० | सन् १९२८ ई० | मूल्यम् १)

* श्रीः *

# प्रकाशकस्य निवेदनम्

इह खलु निखिलचराचरनायकस्य परमेशितुः क्रीड़ाक्षेत्रे प्रपञ्चेऽस्मिन् द्विविधा अवलोक्यन्ते सर्वेऽपि पदार्थाः, प्राकृताः संस्कृताश्चेति। प्रकृत्योत्पादित एव स्वरूपे ये व्यवस्थितास्ते प्राकृताः। दोषमार्जनातिशयाधानहीनाङ्गपूर्त्यात्मक-त्रिविधसंस्कारेण कञ्चिदतिशयं प्रापितास्तु संस्कृताः। तत्र च प्राकृतापेक्षया संस्कृतानामस्ति कोऽपि महिमा, त एव लोकस्यादरास्पदानि, ते चैव सर्वविधोपयोगसाधनानीति न कस्यापि परोक्षतामवगाहतेऽर्थोऽयम्। यथैव जड़ेषु पदार्थेषु, तथैव निर्विशेषं चेतनेषु, चेतनमूर्धन्येषु मनुष्येषु चास्ति संस्कारप्रसारस्तत्कृतो महिमातिशयश्चेत्यपि न विचारदृशां विशेषेण विवेचनामपेक्षते। यथाविधि संस्कारबाहुल्यादेवेयमार्यजातिः सर्वस्मिन्नपि जगतीतले शिरोमण्डनायमाना विद्यासु, कलासु, पराक्रमे, साम्राज्यप्रतिष्ठापने तत्परिपालने, द्रविणराशिसंग्रहे, यशोवितनने च सर्वातिशायिनं कमपि महिमानमुवाह, जगद्गुरुपदञ्च स्थाने दधारेति सर्वेऽप्यैतिहासिकाः सशिरःकम्पमभिमन्यन्त एव। प्रचरन्ति यद्यपि जात्यन्तरेष्वपि संस्कारास्तथापि न त आर्यजातेरिव वैज्ञानिकीं पद्धतिमनुसन्दधानाः, न वा यथापेक्षितं बहलाः। अष्टचत्त्वारिंशद्धि संस्कारा आर्यजातौ स्मर्यन्ते, तेषु कतिचन ब्राह्माः, अपरे दैवाः। दैवेष्वेव संस्कारेषु सर्वविधाः श्रौताः स्मार्ताश्च यज्ञा अप्यन्तर्भवन्ति, तेषामपि विज्ञानात्मनि दैवात्मरूपातिशयाधायकत्त्वादित्या स्तां तावत्। तेषामेषां सर्वेषामपि संस्काराणां वेद एव मूलमिति मनुयाज्ञवल्क्यप्रभृतिभिर्महर्षिभिः—

यज्ञानां तपसांचैव शुभानां चैव कर्मणाम्।
वेद एव द्विजातीनां निःश्रेयसकरः परः॥

(इति याज्ञवल्क्यः)

"वेदाद्धर्म्मो हि निर्बभौ। वेदमेव सदाभ्यसेत्॥" (मनुः)

इत्यादिवचनजातैर्वेदैकशरण्यत्वमार्यजातेरुपादिष्टम् ।

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥

( गीता )

इत्यादिभिर्भगवद्गीतावचनैश्च यज्ञानामावश्यकत्त्वमभ्यर्हिततमत्त्वं च भूरि भूरि ख्यापितम् । किमन्यत् ? निःशङ्कं निःसंशयञ्च शक्यत एतद्वक्तुं यदार्यजातेर्द्वय-मेव सर्वस्वम्, वेदो यज्ञश्चेति । अनयोरेवोपबृंहणाय तत्त्वख्यापनाय च सर्वे स्मृतिग्रन्थाः सूत्रभाष्यनिबन्धविस्तीर्णा सर्वाऽपि मीमांसा, सर्वे च धर्म्मनिबन्धाः प्रवर्तन्ते, येषां संख्या संस्कृतवाङ्मयाम्बुधिमुद्वेलयतीव । परं ह्यहन्त ! सोऽयं सर्व-विज्ञानरत्नाकरो वेदः, स एष सर्वपुरुषार्थसाधनमूर्धन्यो यज्ञः, त इमे सर्वो-त्कर्षकारणीभूताः संस्काराः अद्यार्यजातावुपेक्षानादरमसहमाना इव विरलप्रचारतां गता इति नाममात्रमेवार्यजातेरवशिष्टम् । मनुष्याणां मन्दप्रतिभतया, दैव-प्रातिकूल्येन निरन्तरमुदरदरीपरिपूरणप्रयासप्रवणतया श्रुतिस्मृतिमीमांसानि-बन्धप्रभृतीनामतिविस्तृततयाऽतिगभरितया च वेदानां स्मृतीनां कर्मकाण्डग्रन्था-नाञ्च परिज्ञानमप्ययत्वे दुःशकम्, दूरे त्वनुष्ठानकथा । यावच्च न स्याद्वेदस्य, वैदिकस्य विज्ञानस्य, तन्मूलकस्य च यज्ञस्य पुनः पुरेव प्रचारः, न भवेच्च सम्यक् संस्कृतत्त्वमार्यजातेः, तावच्छतधा डिण्डिमताडनेऽपि, अनेकधा भगीरथ-प्रयत्नाश्रयणेऽपि चीत्काररवैर्दिशां बधिरीकारेऽपि नार्यजातेरुन्नतिः कथमपि सेत्स्य-तीति विदुषां निष्प्रतिपक्ष एष सिद्धान्तः । तस्माद्देशकालशैलीमनुरुध्य वैदिककर्मप्रचारायोपयुक्ता वेदोक्तकर्मस्वरूपतद्रहस्यख्यापका ग्रन्था अतितमामपे-क्ष्यन्ते, यैः सम्भवति कर्म्मस्वरूपतद्रहस्यादिविज्ञाने तत्र प्रवृत्तिरपि शिक्षितानां विचारचतुराणां संभवेत् । वैदिककर्मप्रचारो हि मुख्यतमं कर्तव्यं द्विजातीनाम् । इममेव कर्तव्यमनुरुध्य, उक्तेन प्रकारेणार्यजातेर्हितमुद्दिश्य चाहमस्य "यज्ञमधु-सूदन" नामकस्य महाग्रन्थस्य प्रकाशने प्रवृत्तोऽस्मि ।

ग्रन्थोऽयं जयपुरराजसभाप्रधानपण्डितैः सुप्रथितनामधेयैर्विद्यावाचस्पति श्रीमधुसूदनशर्म्ममैथिलैर्निर्मितः, ये हि महानुभावास्त्रिंशतो वत्सरेभ्यो विस्मृता-

न्यकार्या अनन्येन भावेन वैदिकरहस्याविष्करणे व्यापृताः सन्ति। येषां च वेद-विषयका अनेके ग्रन्था भारते सुप्रसिद्धा विद्वत्सु सम्यक् समाद्रियन्ते। यद्यपि वैदिकविज्ञानाविष्करणायैव विशेषेण तेषां प्रवृत्तिः, किन्तु सर्वमपि वैदिकं विज्ञानं यज्ञाधारेणैव प्रथत इति यज्ञस्वरूपविज्ञानमन्तरेण न शक्यं कथमपि वैदिकं विज्ञानं यत्नसहस्रेणापि प्रतिपत्तुम् ?। यथा ह्याधुनिकस्य विज्ञानस्य (Science=साइन्स) (Laboratory=लेबोरेटरी) एव मुख्य आधारः, तथैव वैदिकस्य विज्ञानस्य यज्ञशाला मुख्य आधारः। तत एव यज्ञस्वरूपख्यापनायोक्तैःपण्डितप्रवरैर्ग्रन्थोऽयं निर्मितः। अत्र कार्त्स्न्येन यज्ञस्वरूपं करतलामलकवत्तथाविष्कृतम्, यथाल्पधिषणा अपि सौकर्येणावबोद्धुं शक्नुयुः। काण्डत्रयविभक्तेऽस्मिन् महाग्रन्थे द्वाविंशतिरध्यायाः सन्ति। तत्र प्रथमे प्रतिपत्तिकाण्डे प्रथमो विहारसमीक्षाध्यायः, यत्र श्रौतयज्ञसम्बन्धिनां देवसदन-कुण्ड-वेदि प्रभृतीनां सुस्पष्टं निरूपणमस्ति। द्वितीयश्चायं स्मार्तकुण्डाध्यायः, यत्र स्मार्तयज्ञोपयुक्ताः कुण्डाद्याः सम्यक् निरूपिताः। श्रौतानां यज्ञादीनां विलुप्तप्रायेऽपि प्रचारे स्मार्तकर्म्माणि कथञ्चिदद्यापि प्रचरन्त्येवेत्यध्यायोऽयं कर्म्मकाण्डरतानां विदुषां विशेषेणोपयोगमावहेत्। तत एव सर्वतः पूर्वमयमेवाध्यायः प्रकाश्यते। एष चेद्विदुषां प्रीतिकरः स्यात्, कथञ्चिदपि च कर्मकाण्डोन्नतावेतदुपयोगः स्यात्, तर्हि विद्वद्भिः संवर्धितोत्साहोऽन्येषामपि ग्रन्थभागानां प्रकाशने व्यापृतः स्याम्। प्रीयताञ्चानेन व्यापारेण वेदैकवेद्यो भगवान् "यज्ञपुरुष" इत्याशास्ते—

विदुषामनुचरः

शिवनाथसिंह वर्मा.

---

# एष यज्ञमधुसूदनस्त्रिकाण्डः।
# तत्राध्याया द्वाविंशतिः

## १ प्रतिपत्तिकाण्डे, अध्यायाः—( ६ )

१ विहारसमीक्षाध्यायः
२ स्मार्तकुण्डसमीक्षाध्यायः
३ उपकरणसमीक्षाध्यायः
४ यज्ञप्रचयसमीक्षाध्यायः ( यज्ञविटपः )
५ कर्मानुक्रमणिकासमीक्षाध्यायः
६ यज्ञरहस्यसमीक्षाध्यायः

## २ प्रयोगकाण्डे त्रयोऽध्यायाः—( ३ )

१ देवभाषाध्यायः
२ यज्ञकल्पद्रुमाध्यायः
३ अग्निचयनाध्यायः

## ३ प्राचीनपद्धतिकाण्डे त्रयोदशाध्यायाः—( १३ )

१ आधानम्
२ अग्निहोत्रम्
३ दर्शपूर्णमासौ
४ चातुर्म्मास्यम्
५ आग्रयणम्
६ पशुबन्धः
७ सौत्रामणी
८ ज्योतिष्टोमः
१० राजसूयः
११ वाजपेयः
१२ अश्वमेधः
१३ गवामयनम्

॥ श्रीः ॥

# यज्ञमधुसूदने

## स्मार्तकुण्डसमीक्षाध्यायः ।

विद्यावाचस्पतिः श्रीमान् महार्घ्यो मधुसूदनः ।
समीक्षाचक्रवर्तीह स्मार्तकुण्डं समीक्षते ॥ १ ॥

यज्ञेश्वरप्रसादाय श्रीयज्ञमधुसूदने ।
स्मार्तकुण्डविधिःपाकयज्ञार्थ उपयुज्यते ॥ २ ॥

दाशतानि श्रौतयज्ञसम्बन्धीनि वैतानिकाग्निकुण्डानि । अथातः प्रसङ्गात् पाकयज्ञसम्बन्धीनि स्मार्त्ताग्निकुण्डान्यपि दर्शयितव्यानि ।

### तत्रादौ मात्रासाधनम् ।

अङ्गुलमानं तावत् कुण्डमण्डपादिसाधने विशिष्योपयुज्यते । तच्च मानोपयुक्तमङ्गुलं चतुर्धा नियम्यते । मानाङ्गुलं, मात्राङ्गुलं, मुष्ट्यङ्गुलं, देहलब्धाङ्गुलं चेति । यवादिद्रव्यमानसाश्रितं मानाङ्गुलम् । तथा हि–वातायनपथप्राप्तेषु रविरश्मिषु संचरन्तः सूक्ष्मरेणवस्त्रसरेणव उच्यन्ते । तत्राष्टौ परमाणव इष्यन्ते । त्रसरेणवोऽष्टावेको महीरेणुः । महीरेणवोऽष्टावेकं बालाग्रम् । तान्यष्टावेका लिक्षा । ता अष्टावेका यूका । ता अष्टावेको यवः । तेऽष्टावेकमङ्गुलम् । उक्तं च—

"त्रसरेणू रथरेणुर्वालाग्रं तदनु लिक्षा च ।
यूका यवोऽङ्गुलमिति क्रमतः परमाणुतोऽष्टगुणितानि ॥

रथरेणु,महीरेणु,महीरज इत्येकार्थाः। तेनैकस्मिन्नङ्गुलेऽष्टौ यवाः स्युः। तथा वा चतुःषष्टिर्यूकाः स्युः। तथा वा पञ्चशतानि द्वादशाधिकानि ( ५१२ ) लिक्षाः स्युः। तथा वा चत्वारि सहस्राणि षण्णवत्यधिकानि बालाग्राणि स्युः। (४०९६)

| | | |
|---|---|---|
| ८ परमाणवः | = | १ त्रसरेणुः |
| ८ त्रसरेणवः | = | १ रथरेणुः |
| ८ रथरेणवः | = | १ बालाग्रम् |
| ८ बालाग्राणि | = | १ लिक्षा |
| ८ लिक्षाः | = | १ यूका |
| ८ यूकाः | = | १ यवः |
| ८ यवाः | = | १ अङ्गुलम् |

तदिदं मानाङ्गुलं त्रिविधम्। उत्तमं, मध्यममधमं च। तदुक्तम्—

"विन्यस्तैस्तिर्य्यगष्टाभिर्यवैर्मानाङ्गुलिः स्मृता ।
सा तूत्तमाङ्गुलिः सप्तयवा सैव तु मध्यमा ॥ १ ॥
षड्यवा साऽधमा प्रोक्ता मानाङ्गुलमितीरितम् ।"

तिर्यग्विन्यस्तैरिति उदरमध्यतो योजितैरित्यर्थः।

एतच्च लोकसाधारणमङ्गुलमानमुक्तम्। प्रातिस्विकं त्वङ्गुलमानं यजमानभेदाद् भिद्यते। तच्च मात्राङ्गुलादि भेदात् त्रिविधम्। तत्र मात्राङ्गुलं तावदङ्गुष्ठमध्यरेखया कल्प्यम्। मध्यमाङ्गुलिमध्यपर्वणा वा। तदुक्तम्—

"कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिमध्यतः ।
पर्वणोरन्तरादैर्घ्यं मात्राङ्गुलमुदाहृतम् ॥" इति ।

मुष्ट्यङ्गुलमप्याह—

"विनाङ्गुष्ठेन शेषाभिर्मुष्टिमङ्गुलिभिः कृतम् ।
चतुर्धा विभजेदेको भागो मुष्ट्यङ्गुलिः स्मृता ॥" इति ।

देहलब्धाङ्गुलं तु विंशत्यधिकशतेन विभक्तस्य पुरुषस्यैको भागः। तदुक्तम्—

यत्किञ्चित्पुरुषायामं विभज्य दशधा पुनः ।
एकं द्वादशधा भागं कृत्वा तेष्वेकमङ्गुलम् ॥
देहलब्धाङ्गुलं नाम जानीयात् तस्य तत्पुनः ।" इति ।

अनेनैव प्रमाणेन यवयूकादयोऽपि संग्राह्याः । तथा हि–प्रपदोच्छ्रितस्योर्ध्वबाहोः पुरुषस्य प्रमाणं कम्बया साधितं पौरुषं नाम । कम्बा मानोपयोगिनी वंशपट्टिका । विंशं शतमङ्गुलानां पौरुषं मानमाहुः । पौरुषस्य मानदण्डस्य पञ्चमांशो हस्तः । हस्तस्य चतुर्विंशोंऽशोऽङ्गुलम् । अङ्गुलस्याष्टमांशो यवः । यवस्याष्टमांशो यूका । यूकाष्टमांशो लिक्षा । एतेषामेव गणितप्रक्रियायामुपयोगो दृश्यते । न त्वतिसूक्ष्माणां बालाग्रप्रभृतीनामतस्तदुपेक्षा ।

अथ चतुर्विंशत्यङ्गुलो हस्तः । स हि कफोणिकादि मध्यमाग्रान्तः । "मध्याङ्गुलीकूर्परयोर्मध्ये प्रामाणिकः करः ।" इति बौधायनोक्तेः ॥ सार्धद्वाविंशत्यङ्गुलस्त्वरत्निः । स हि हस्तस्य षोडशांशेन न्यूनः कफोणिकादिकनिष्ठाग्रान्तः । एकविंशत्यङ्गुलस्तु रत्निः । स हि बद्धमुष्टिप्रकोष्ठः कफोणिकादिमुष्ट्यन्तो हस्तस्याष्टमांशेन हीनः । महाहस्तः, अरत्निहस्तः, रत्निहस्तः, इत्येते त्रयोऽपि हस्तविशेषाः कर्मविषेषूपयुज्यन्ते ।

शतपथश्रुतौ तु चतुर्विंशत्यङ्गुल एवारत्निहस्तो नियम्यते । एतच्च प्रातिस्विकमानसाधितं प्रातिस्विकमेव हस्तत्रयमाख्यातम् । मानांगुलसाधितं तु हस्तमानं साधारणं स्यात् । तस्यापि त्रैविध्यमाहुः । चतुर्विंशतिमितैः षड्यवाङ्गुलैर्ब्रह्महस्तः । सप्तयवांगुलैर्विष्णुहस्तः । अष्टयवांगुलैः शिवहस्त इति ।

ब्रह्मविष्णुशिवादीनां ये हस्ताः परिकीर्तिताः ।
षट् सप्ताष्टयवैर्मानाङ्गुलैस्तांस्तु प्रयोजयेत् ॥"

इति शारदोक्तेः । एवं हस्ताङ्गुलमानानां नानाविध्ये तद्व्यवस्थामाहुः । यागोपकरणानि होमाङ्गानि स्रुवादीनि च मानांगुलेन साध्यानि । कुण्डन्तु मुष्ट्यङ्गुलेन देहलब्धाङ्गुलेन वा कल्पयेत् । प्रतिमोच्छ्रायो मात्राङ्गुलेन प्रतिमाङ्गानि तु मानाङ्गुलेन कार्य्याणि । प्रासादादि निर्म्माणं मात्राङ्गुलेन मानांगुलेन वा संभवति । वेदी, स्थण्डिल, पीठ, शिविका, रथादयस्तु मानाङ्गुलेन कार्य्याः । वेश्मप्रासादारामादयो विष्णु-

हस्तेन, तडागारामक्षेत्रक्रोशादयस्तु शिवहस्तेन कार्य्याः इति विधानपारिजातादिषु निरूपितम् । क्वचित्तु मतभेदो दृश्यते । तेनात्र कामचारो द्रष्टव्यः । अथापि प्रक्रमनिर्वाहोऽनुरोद्धव्यः । यादृशहस्ताङ्गुलमानेन यत्किञ्चित्प्रक्रम्यते तत्र तेनैव मानेन सर्वाण्यङ्गानि साध्यानि । मानसङ्करो यथा न स्यात्तथा कार्य्यमिति दिक् ॥

| | |
|---|---|
| ६ यवाः = १ अधमं मानाङ्गुलम् | २४ अधमाङ्गुलानि = १ ब्रह्महस्तः |
| ७ यवाः = १ मध्यमं ,, | २४ मध्यमाङ्गुलानि = १ विष्णुहस्तः |
| ८ यवाः = १ उत्तमं ,, | २४ उत्तमाङ्गुलानि = १ शिवहस्तः |
| २१ अंगुलानि = १ रत्निहस्तः | ४ महाहस्ताः = १ व्यामः |
| २२॥ अंगुलानि = १ अरत्निहस्तः | ५ महाहस्ताः = १ पुरुषः |
| २४ अंगुलानि = १ महाहस्तः | |

अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेशः । मध्यमया तालः । अनामया गोकर्णः । कनिष्ठया वितस्तिः ॥ सार्द्धदशांगुलः प्रादेशः । प्रादेशद्वयं रत्निः । स एकविंशत्यङ्गुलः । रत्निद्वयं किष्कुः । स द्विचत्वारिंशदङ्गुलः ॥ षडङ्गुलं प्रपदम् । प्रपदद्वयं पदं वितस्तिर्वा द्वादशाङ्गुला । वितस्तिद्वयं हस्तश्चतुर्विंशत्यङ्गुलः । हस्तद्वयं ब्रह्मतीर्थमष्टाचत्वारिंशदङ्गुलम् । ब्रह्मतीर्थद्वयं धनुर्दण्डः । स चतुर्हस्तः षण्णवत्यङ्गुलः । धनुर्दण्डद्वयं नाली । त्रिंशद्धनूंषि नल्वम् ॥ द्वे धनुः सहस्रे क्रोशः । क्रोशद्वयं गव्यूतिः । तत्र चत्वारि धनुः सहस्राणि स्युः । गव्यूतिद्वयं योजनम् । तत्राष्टौ धनुः सहस्राणि स्युः ॥

| | |
|---|---|
| १०॥ अंगुलानि= १ प्रादेशः | ६ अंगुलानि=१ प्रपदम् = ६ अंगुलानि |
| २ प्रादेशौ = १ रत्निः | २ पदे =१वितस्तिः=१२ ,, |
| २ रत्नी = १ किष्कुः | २ वितस्ती =१हस्तः =२४ ,, |

| | | | |
|---|---|---|---|
| २ हस्तौ | = १ ब्रह्मतीर्थं = | ४८ | अंगुलानि |
| २ ब्रह्मतीर्थे | = १ धनुर्दण्डः= | ९६ | ,, |
| २ धनुर्दण्डौ | = १ नाली = | १९२ | ,, |

| | |
|---|---|
| ३० धनूंषि = १ नल्वः | २ क्रोशौ =१ गव्यूतिः=४०००धनूंषि |
| २००० धनूंषि = १ क्रोशः=२००० ध. | २ गव्यूती=१ योजनम्=८०००धनूंषि |

## अथ भूमिसमीकरणम् ॥ २ ॥

तत्र तावज्जलतुलायन्त्रेण भूमिं समीकुर्य्यात् । उच्च—वर्तुल-प्राकारघटितं जलपूर्णपात्रं यत्र भूतले तलेन चालितं जलं न पातयति, तद्भूतलं समं ज्ञेयम् । जलपतने तु यस्यां दिशि पतेत् तत्र दिशि पात्रस्याधस्तान्मृत्तिकां दद्यात् । तदन्य· दिशि पात्रस्याधस्तान्मृत्तिकामुद्धरेद्वा । तथा चैषा भूमिर्जलसमीकृता स्यात् ॥ अथवा भारयन्त्रेण भूमिं समी कुर्य्यात् । तथा हि—समैस्त्रिभिर्दण्डैः प्रान्तसंलग्नैः समत्रिभुजं समीकरणयन्त्रं भवति । तस्य शिरोधेयकोणे प्रोतमधोबद्धपाषाणभारं लम्बसूत्रमालम्बितं क्रियते । अधस्तनस्य तिर्य्यग्दण्डस्य मध्यभागे छिद्रादिचिह्नं क्रियते । यन्त्रे भूमौ समुत्तोलिते सति लम्बसूत्राधः प्रोतभाराग्रमधस्तनदण्डमध्यगतचिह्नाभिमुखं यथा स्यात् तथा प्रयोजयेत् । तथा प्रयुक्तोऽधस्तनः स दण्डो यत्र यत्र भूम्या न स्पृश्यते तत्र तत्र मृदमापूर्य्य भूमिं दण्डेन समीकुर्य्यात् । उक्तं च कुण्डप्रकाशिकायाम्—

कीलेनैकीकृते मूले पृथक् सूक्ष्म समाग्रयोः ।
दण्डयोरग्रनैकग्येऽन्यस्तिर्य्यङ् मध्यचिह्नितः ॥ १ ॥
कीलादिना योजनीयो दण्डः समतया द्वयोः ।
मूलप्रोतं लम्बसूत्रमस्पृशद् भारवद् भुवम् ॥ २ ॥
भूस्थेऽग्रयुग्मे मध्याङ्कात् तिर्य्यग्दण्डगताद्यतः ।
स्खलेत् तत्पूरयेदन्यं निम्नयेद्वापि युक्तितः ॥ ३ ॥
अङ्के यावत्सूत्रमेति भूरित्थं समतां व्रजेत् ।
विशोधितायां प्राक् तस्यां मण्डपादि समाचरेत् ॥ ४ ॥ इति ॥

मण्डपादिकर्म्मणि तावदुच्चावचादिप्रदेशवैषम्यनिरसनमात्रं भूमिसमीकरणमपेक्ष्यते न तु भूमेरप्रवणत्वेऽपि तत्राग्रहः। प्रागुदक्प्रवणस्यैव देशस्य देवयजनतया तस्यैव यज्ञोपचारे प्राशस्त्यात् । प्रागुदक्प्लवने देशे मण्डपादिसमाचरेदिति सिद्धान्तात् ॥ दिक्साधनकर्मणि तु सर्वथा भूमेः समतापेक्ष्यते । उच्चावचभूमेः प्रवणभूमेश्च तत्र दोषाधायकत्वात् ॥



## अथ दिक्साधनम् ॥ ३ ॥

तत्रादौ छायामूलकदिक्साधनाय शङ्कु-कल्पतिः । स हि शङ्कुः सूच्यग्रः सरलः प्रायेण द्वादशाङ्गुलः पृथुमूलः कार्य्यो येनायं भूमौ धृतः स्थिरस्तिष्ठेत् । अथवा तस्याधस्तादपि कश्चन भागः सूक्ष्माग्रोऽधिकः कार्य्यो, योऽस्य भूमौ निखात-स्यान्तः प्रविशेत् ॥ ( १ )

पादोनशङ्कुसंमितव्यासार्द्धेन वृत्तं निर्म्माय तन्मध्ये शङ्कुं संस्थाप्य तस्य दिक्चतुष्टये समाः सपादशङ्कूच्चप्रमाणा मध्यमशङ्कोः शिरसा संयोजिता एकी-कृताग्राश्चत्वारः शङ्कवः प्रयोज्याः । यद्येषां शिरांसि मध्यमस्य शिरसा समं युज्यन्ते तर्हि स मध्यमः शङ्कुः समोन्नतोऽवधार्य्यते । समोन्नतस्यैव शङ्कोर्दिक्साधनोपयोगि-त्वात् ॥ ( २ )

अथवा नवाङ्गुलव्यासार्द्धेन वृत्तं कृत्वा मध्ये द्वादशाङ्गुलं शङ्कुं संस्थाप्य दक्षिणोत्तरयोर्वा पूर्वपश्चिमयोर्वा वृत्तपाल्यां हस्तोन्मितं समं समीकरणयष्टिद्वयं स्थापयेत् । तयोर्यष्ट्योरुपरि हस्तमिता लम्बानुपट्टी समं स्थाप्या । तस्याः प्रान्त-लम्बितेन लम्बसूत्रेण यष्ट्योः समोन्नतिर्विज्ञायते । गर्भलम्बितेन तु लम्बसूत्रेण शङ्कुशिरसि समं प्राप्तेन मध्यशङ्कोः समोन्नतिः साधु प्रतिपद्यते । इत्थं प्रकारद्वयेन शङ्कुमेव तावत् संशोधयेत् ॥ ( ३ )

ततः शङ्कुमानार्द्धेन साग्रिकेन कृते वृत्ते मध्यमशङ्कुच्छाया वृत्तपाल्यां यत्र प्रविशति, यत्र वा बहिर्गच्छति तत्रोभयत्र चिह्नं कृत्वा तदुपरि सूत्रं दद्यात्, सा प्राची । तामशुद्धां विद्यात् । परदिनेऽप्येवं प्रवेशनिर्गमचिह्नं कृत्वा दिनद्वयचि-ह्नान्तरमिष्टैस्त्रिचतुराद्यैर्भागैर्विभज्य तत्राङ्कयेत् । छायादिना च प्रवेशनिर्गमान्त-

रालघटीः संसाध्य ताभिर्घटीभिः प्रगुणितास्तेऽन्तरालभागाः षष्ट्या भाज्याः । लब्धांशैरेव पूर्वदिनकृतः पूर्वभागस्थः प्राचीविन्दुर्दक्षिणायने दक्षिणतः संचाल्यते, उत्तरायणे तूत्तरतः । सा स्फुटतरा प्राची स्यात् ॥ अथैतद्वृत्तमध्यं किंचिदुल्लङ्घ्य-पादोनशङ्कुसंमितव्यासार्द्धेनैव द्वे वृत्तार्द्धे परस्परश्लिष्टे कार्ये। तत्र मत्स्ययोर्मध्याद्दक्षिणोत्तरसूत्रं पातयेत् सोदीची । ( ४ ) ॥

परे तु तारामूलकं दिक्साधनमाहुः । समशीर्षयोर्वंशयोरेकमुदीच्यां संस्थाप्य ततः किञ्चिदन्तरेण दक्षिणस्यां द्वितीयं वंशं तथा स्थापयेत्, यथैतद्वंशद्वयसंलग्ना ध्रुवतारा दृश्येत। ततस्तयोर्वंशयोरधोदेशे चिह्नद्वयं कुर्य्यात्, सोदीची ॥ चिह्नद्वयान्तरसूत्रेण पूर्वपश्चिमयोर्मत्स्यौ कुर्य्यात्, सा प्राची ॥ ( ५ ) ॥

इत्थं मुख्या दिशः संसाध्य दिग्द्वयमध्यलक्षणतः कोणान् साधयेत् । तत्र चतुर्भिः सूत्रैश्चतुरस्रं क्षेत्रं समं संपद्यते ॥










विधानपारिजातके त्वन्यथाऽप्याहुः—

श्रवणस्योदये प्राची प्राची स्यात् कृत्तिकोदये ।
चित्रास्वात्यन्तरे प्राची न प्राची चन्द्रसूर्ययोः ॥ १ ॥

रात्रौ संसाधयेत् प्राचीं साधकेन्द्रः प्रमाणतः ।
कृत्तिका श्रवणं पुष्यं चित्रास्वात्योर्यदन्तरम् ॥ २ ॥
एतत् प्राच्या दिशो रूपं युगमात्रोदिते पुनः ॥ इति ।

एतच्च पूर्वकालानुसारेणोक्तम् । पुरा युगे ह्येतेषां तारानक्षत्राणां विषुवद्रेखायामुपसत्त्या प्राचीलक्षणत्वमासीदिति वेदवाक्यादवगम्यते । अद्यत्वे तु कृत्तिकाश्रवणादीनां शरवन्नक्षत्रतया न प्राचीलक्षणत्वं संभाव्यते । तस्मात् पूर्वोक्तमेव साधीय इति दिक् ॥

## अथ मण्डपसाधनम् ॥ ४ ॥

तत्र तावन्मण्डपनिर्माणाय स्थानमाहुः—

समुद्रगा नदीतीरे संगमे वा शिवालये ।
आरामे विष्णुगेहे वा देवखातादिसन्निधौ ॥ १ ॥
गृहस्येशानभागे वा मण्डपं रचयेद् दृढम् ॥ इति ॥

यदि धामाग्रे मण्डपः क्रियते तदा तद्धामपरिमाणमन्तरं त्यक्त्वा परतो मण्डपं कुर्य्यात् । यत्र तु मण्डपद्वयं क्रियते तत्र प्रथममण्डपपरिमितमन्तरं त्यक्त्वा द्वितीयमण्डपं कुर्य्यात् । तदुक्तं विश्वम्भरशास्त्रे—

धाम्नो धाम्नान्तरं त्यक्त्वा धामाग्रे यज्ञमण्डपः ।
मण्डपान्तरमुत्सृज्य कर्तव्यं मण्डपद्वयम् ॥ १ ॥ इति ॥

अथ मण्डपनिर्म्माणे भूमिमष्टधा परीक्षेत—विकारतः, प्रवणतः, द्रव्यतः, स्पर्शतः, रूपतः, रसतः, गन्धतः, शल्यतश्चेति । तद्यथा—

१—विकार-परीक्षा ।

स्फुटिता च सशल्या च वल्मीका रोहिणी तथा ।
दूरतः परिवर्ज्या भूः कर्तुरायुर्धनापहा ॥ १ ॥
स्फुटिता मरणं कुर्य्यादूषरा धननाशिनी ।
स शल्या क्लेशदा नित्यं विषमा शत्रुभीतिदा ॥ २ ॥

२—प्रवण-परीक्षा।

ईशकोणप्लवा सा च कर्तुः श्रीदा सुनिश्चितम्।
पूर्वप्लवा वृद्धिकरी बलदा तूत्तरप्लवा॥ १॥
विद्वेषं मरणं व्याधिं कुर्य्यादग्निप्लवा मही।
धर्मराजप्लवा भूमिर्नित्यं मृत्युभयप्रदा॥ २॥
गृहक्षयकरी सा च भूमिर्या नैर्ऋतप्लवा।
धनहानिकरी पृथ्वी कीर्त्तिदा वरुणप्लवा॥ ३॥
वातप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी॥

३—द्रव्य-परीक्षा।

ब्राह्मणी भूः कुशोपेता क्षत्रिया स्याच्छराकुला।
कुशकाशाकुला वैश्या शूद्रा सर्व तृणाकुला॥ १॥
कुशैःशरैस्तथाकाशैर्दूर्वाभिर्या च संभृता।
प्रशस्ता भूर्महाबाहो मण्डपादौ विशेषतः॥२॥

४—स्पर्श-परीक्षा।

शीतस्पर्शोष्णकाले च वह्निस्पर्शा हिमागमे।
वर्षासु चोभयस्पर्शा सा शुभा परिकीर्त्तिता॥ १॥

५—रूप-परीक्षा।

श्वेता तु ब्राह्मणी पृथ्वी रक्ता वै क्षत्रिया स्मृता।
वैश्या पीता तु विज्ञेया कृष्णा शूद्रा प्रकीर्त्तिता॥ १॥
श्वेतारुणा पीतकृष्णा विप्रादीनां प्रशस्यते।
स्थिरोदका दृढा स्निग्धा भूमिः सर्वसुखावहा॥ २॥

६—रस-परीक्षा।

ब्राह्मणी घृतगन्धा स्यात् क्षत्रिया रसगन्धिनी।
वैश्या तिक्ता च विज्ञेया शूद्रा स्यात् कटुका च या॥१॥

मधुरा च कषाया च अम्ला च कटुका च या ।
विप्रादीनां प्रशस्ता भूर्मण्डपादौ विशेषतः ॥२॥

७—गन्ध-परीक्षा ।

काश्मीरचन्दनामोदा कर्पूरागुरुगन्धिनी ।
कमलोत्पल गन्धा च जातिचम्पक गन्धिनी ॥१॥
पाटलामल्लिकागन्धा नागकेसर गन्धिनी ।
दधिक्षीराज्यगन्धा च मध्विक्षु रसगन्धिनी ॥२॥
सुगन्धि व्रीहिगन्धा च शुभगन्ध युता च या ।
सर्वेषामेव वर्णानां भूमिः साधारणा मता ॥३॥

८—शल्य-परीक्षा ।

प्रासादारम्भकाले च गृहादौ च विशेषतः ।
शल्योद्धारः प्रकर्त्तव्यो यदीच्छेच्छुभमात्मनः ॥ १ ॥
प्रासादारम्भकाले च यदङ्गं पुरुषः स्पृशेत् ।
वास्तुदेहे दृढं तत्र शल्यं विद्याद्विचक्षणः ॥ २ ॥
कण्डूयति शिरः पुंसि शिरः शल्यं समुद्धरेत् ।
शल्यं तत्रास्थि विज्ञेयं खन्यमाने करत्रये ॥ ३ ॥
बाहुकण्डूयनाज्ज्ञेया द्विहस्ते लोहशृङ्खला ।
ऊरुकण्डूयनाद्धस्त मात्रे कांस्यं विनिर्दिशेत् ॥ ४ ॥
हस्तकण्डूयनाद्धस्त त्रये कंकालमादिशेत् ।
पृष्ठकण्डूयनाद्धस्ते बहु( बाहु )शल्यं विनिर्दिशेत् ॥ ५ ॥
पादकण्डूयनाद्धस्ति शल्यं हस्तद्वये भवेत् ।
कुक्षिकण्डूयनाद्धस्त त्रये पाषाणमादिशेत् ॥ ६ ॥
जानुकण्डूयनाद्भस्म शल्यं हस्तद्वये भवेत् ।
अङ्गारं च तुषं केशमास्थिशल्यं समुद्धरेत् ॥ ७ ॥
शिरःशल्येन रोगः स्यादग्निदाहो धनक्षयः ।
लोहशल्ये तु मृत्युः स्याद् विदेशगमनं तथा ॥ ८ ॥

कांस्यशल्ये तु भार्य्या स्यादसाध्वी च यशः क्षयः ।
कंकालशल्ये मरणं रोगोऽग्निदहनं तथा ॥ ९ ॥
धातुशल्ये स्वामिनाशो भार्य्या वा जायतेऽसती ।
हस्तिशल्ये राजदण्डः सस्यहानिः पशुक्षयः ॥ १० ॥
पाषाणशल्यानुद्धारात् सर्पदंशो भविष्यति ।
भस्मशल्याद्यनुद्धारात् क्लेशदुःखभयानि च ॥ ११ ॥
अग्निदाहो मनस्तापो वसतां तत्र जायते ।
तस्मात् सर्वप्रयत्नेन शल्यमुत्पाटयेन्नरः ॥ १२ ॥
शल्योद्धारं ततः कृत्वा पूरयेत् सुषमं यथा ।
खन्यमाने जलं यावच्छल्यदोषो न विद्यते ॥ १३ ॥
दूरनीचस्थितं वारि खनितुं नैव शक्यते ।
पञ्चहस्तं प्रखातव्यं शल्यदोषोपशान्तये ॥ १४ ॥
गोशृङ्गं पीतमण्डूकः शंखः शुक्तिश्च कच्छपः ।
शंबूकश्च प्रशस्ताः स्युर्याश्चान्या रत्नजातयः ॥ १५ ॥

## अथ मण्डपायतनम् ।

मण्डपस्त्रिविधः—अधमः, मध्यमः, उत्तमश्च । दशहस्तोऽधमः । द्वादशहस्तो मध्यमः । षोडशहस्त उत्तमः । इत्येकं मतम् ॥ द्वादशहस्तोऽधमः । चतुर्दशहस्तो मध्यमः । अष्टादशहस्त उत्तमः । इत्यपरं मतम् ॥ तुलापुरुषदानादौ तु विंशतिहस्तमिच्छन्ति । एतैरेतैर्हस्तैः क्षेत्रभुजमेकैकं संसाध्य समचतुरस्रं मण्डपक्षेत्रं सम्पादयेत् ॥ हस्तानां शतं दशहस्तस्य, चतुश्चत्वारिंशं शतं द्वादशहस्तस्य, षण्णवतं शतं चतुर्दशहस्तस्य । एकोनषष्ट्यधिके द्वेशते षोडशहस्तस्य, चतुर्विंशानि त्रीणि-शतान्यष्टादशहस्तस्य, चत्वारि शतानि विंशतिहस्तस्य, क्षेत्रफलानि ।

| | | | | | | |
|---|---|---|---|---|---|---|
| १० | १२ | १४ | १६ | १८ | २० | हस्तैः |
| १०० | १४४ | १९६ | २५९ | ३२४ | ४०० | क्षेत्रफलानि |

विधानपारिजाते तु नवधा मण्डपा नामतो निर्दिश्यन्ते । अष्टहस्तो घनः । दशहस्तो घोरः । द्वादशहस्तो विरामः । चतुर्दशहस्तः काञ्चनः । षोडशहस्तः

कामराजः । अष्टादशहस्तः सुघोषः । विंशतिहस्तो घर्घरः । द्वाविंशतिहस्तो दक्षः । चतुर्विंशति-हस्तो गहन, इति भेदात् ॥ केचित्तु द्वादशहस्तमारभ्याष्टाविंशति-हस्तान्ता नव मण्डपा इष्यन्ते । अपि च विंशतिहस्तो ब्राह्मणानां, षोडशहस्तः क्षत्रियाणां, द्वादशहस्तो वैश्यानां, दशहस्तः सच्छूद्राणां, अष्टहस्तो हीनवर्णानां मण्डपः प्रशस्यते ॥ केचित्तु षोडशचतुर्दशद्वादशहस्ता उत्तममध्यमाधमा उच्यन्ते । इति ॥ एवं मतभेदेऽपि कार्य्यकारणानुसारेण व्यवस्था नेया ॥

स्थलाद् द्वादशाङ्गुलोच्छ्रितो मण्डपः स्थूल इष्यते । यथचछं वातदुच्छ्रायः कार्य्यः ॥ अपि च—

> आख्यातैः साधनैः क्लृप्तः सरलः सममानकः ।
> मनोज्ञो मण्डपो योऽसौ कर्मकर्तुः शुभावहः ॥१॥
> अनुक्तसाधनैः क्लृप्तो यदि वा कुटिलाकृतिः ।
> मानाधिकोऽथवा न्यूनो मण्डपः कर्तृनाशकः ॥२॥

अथ जम्बूमधूकशालादिसारवद्दारुसंभूता ऋजवः समा द्वादशांगुलपरीणाहाश्चतुरस्रा वर्तुला वा षोडशस्तम्भाः कार्य्याः । तत्र चत्वारो वेदिकोणस्था अष्टहस्तोन्नताः स्युः । उत्तमे तु मण्डपे मण्डपविस्तारार्द्धमित्याष्टहस्ता नवहस्ता वा स्युः । अथाऽन्ये चत्वारो मण्डपकोणस्था द्वौ द्वौ तु प्रत्येकं चतुर्षु मण्डपद्वारेष्वित्येवं द्वादशैते बहिः स्तम्भाः पञ्चहस्तोन्नताः स्युः । सर्वे चैते स्वपञ्चमांशैर्भुवि निखेयाः ॥ न चैते वेधयुक्ता इष्यन्ते । सचूडास्तु सर्वे भवन्ति । चूडं स्तम्भानामुपरि कृतं शल्यम् । तानि च शल्यानि स्तम्भप्रमाणाद्बाह्यानि, न तु पञ्चहस्तादिस्तम्भप्रमाणेष्वन्तर्भाव्यानि । चूडार्पितापि चोभयतो रन्ध्राणि वलिकाख्यानि तिर्य्यग्दारूणि विन्यसेत् ॥ ततस्तेभ्यो बाह्यस्तम्भमस्तकेभ्यो वेदिकोणस्तम्भचूडेषु सरन्ध्राणि वलीनामानि तिर्यग्दारूणि क्षिप्त्वा तदूर्ध्वं चतसृभिरुच्छ्रितिं विदध्यात् ॥ तासां च वलिकानामुपरितनमुखभागा एकस्मिन्नूर्ध्वनिहिते दारुकुम्भे निक्षेप्याः । पश्चाद्यथावकाशं सर्वत्र काष्ठवलिका दत्त्वा कटैरेव मण्डपः परितश्छादनीयः ।

चतुर्द्वारो हि मण्डपो भवति । तत्रावमे तानि द्विहस्तानि । मध्यमे चतुरंगुलाधिकानि । उत्तमे स्वष्टांगुलाधिकानि । तानि च मुख्यदिगाश्रितानि कार्य्याणि, न तु कोणाश्रितानि, दिग्विच्युतानि विषमाणि वा ॥ तेष्वेतेषु चतुर्द्वारेषु चत्वारि तोरणानि भवन्ति । तत्र पूर्वादिक्रमेणाश्वत्थोदुम्बरप्लक्षवटैः प्रतितोरणं द्वे द्वे कृत्वा

ता अष्टौ द्वारशाखाः कार्य्याः । ताश्चावमे पञ्चहस्ताः, मध्यमे षड्ढस्ताः, उत्तम सप्तहस्ताः स्युः । सचूडासु च तास्वधमे द्विहस्तानि, मध्यमे षडङ्गुलाधिकानि, उत्तमे तु द्वादशांगुलाधिकानि दारुफलकानि स्वविलैर्विन्यसेत् । तेषु दारुफलकेषु मस्तके फलकद्वादशांशेन कीला निक्षेप्याः । ते च अवमे चतुरंगुलाः, मध्यमे सार्धचतुरंगुलाः, उत्तमे तु पञ्चांगुलाः स्युः । एते च कीला वैष्णवे यागे शङ्खचक्रगदापद्माकाराः कार्य्याः । शैवे तु शूलाकाराः ॥ तच्चेदं शूलं त्रिशृङ्गं क्रियते । तत्र पार्श्वशृङ्गे वक्रे स्याताम् । मध्यमं तु समम् । एतच्च शूलं नवांगुलदीर्घं, दैर्घ्य तुरीयांशमित्या सपादद्व्यंगुलविस्तारं, तस्य च फलकविले द्व्यंगुलं प्रवेश इत्यवमे । मध्यमे त्वेकादशांगुलदीर्घं, दैर्घ्य तुरीयांशमित्या पादोनत्र्यंगुलविस्तारम् । तस्य त्र्यंगुलं विल प्रवेशः ॥ अथोत्तमे मण्डपे त्रयोदशांगुलदीर्घं, दैर्घ्य तुरीयांशमित्या सपादत्र्यंगुलविस्तारम् । तस्य चतुरंगुलं विलप्रवेश इति विशेषः ॥ सर्वाश्च ताः शाखाः स्वपञ्चमांशैरवटे निक्षिप्यन्ते ॥

अथ मण्डपे पूर्वादिक्रमेण ध्वजाः संनिवेश्यन्ते । तदुक्तम्—

मण्डपस्य बहिर्दण्डैर्दशहस्तायतैः सह ।
पूर्वाद्यष्टसु काष्ठासु ध्वजान् संस्थापयेत् क्रमात् ॥ १ ॥
तेषां हस्तद्वयं व्यासो मध्यश्च करसंमितः ।
व्यासार्द्धं शिखरं पुच्छं हस्तत्रितयमानतः ॥ २ ॥
मत्स्याभं शिखरं प्रोक्तं पुच्छं तु स्यात् त्रिकोणकम् ।
तयोर्मध्यं चतुःकोणं ध्वजमेवं प्रकल्पयेत् ॥ ३ ॥

तत्र प्रागिन्द्रस्य पीतः पिशङ्गो वा । आग्नेय्यामग्नेरग्निवर्णो रक्तो वा । दक्षिणे यमस्य कृष्णः । नैर्ऋत्यां रक्षसां शुकतनुसदृशो नीलः । पश्चिमे वरुणस्य श्वेतः । वायव्ये वायोर्धूम्रः, कुण्डप्रदीपे । शुकाभ इति कुण्डकल्पद्रुमे । उत्तरे कुबेरस्य हरिसिताभ उज्ज्वलः । विचित्र इति केचित् । ऐशान्यामीशस्य शुक्लः । नैर्ऋतपश्चिमान्तरालेऽनन्तस्य धूम्रवर्णः, कुण्डप्रदीपे । घननिभः कुण्डकल्पद्रुमे पूर्वेशानान्तराले ब्रह्मणो विचित्रः, प्रदीपे । अरुणः, कल्पद्रुमे । एते च ध्वजा गजच्छागमहिषसिंहमत्स्यमृगाश्ववृषगरुडहंसैरङ्किताः दिग्गजैरङ्किता वा पञ्चहस्तमिता द्विहस्तायताश्च कार्य्याः । ध्वजदण्डास्तु वंशजा दशहस्तोच्छ्रिताः स्युः । एवमेव पताका अपि प्रतिदिशमारोप्यन्ते । ताश्च सप्तहस्तमिता हस्तमात्रायता एकविंशत्यंगुलविस्तृता वा लोकपालवर्णास्तदायुधाङ्किता वाहनाङ्किताश्च कार्य्याः । तेषां वर्णा आयुधानि वाहनानि च पठ्यन्ते—

सिन्दूराः कर्बुरा धूम्रा धूसरा मेघसंनिभाः ।
हरिताः पाण्डुवर्णाश्च शुभ्राः पूर्वादितः क्रमात् ॥ १ ॥
अथवा पीत आग्नेयोऽञ्जनो नीलो हिमप्रभः ।
शुक्लाभश्चित्रितः श्वेतोऽरुणो मेघनिभस्तथा ॥ २ ॥
वज्रं शक्तिर्दण्डखड्गौ पाशाङ्कुशगदास्तथा ।
शूलं कमण्डलुश्चक्रं लोकपालायुधान्यपि ॥ ३ ॥
लोकेशवाहनानि स्युर्गजोवस्तोऽथ सैरिभः ।
सिंहो मत्स्यो मृगो वाजी वृषो हंसः सुपर्णकः ॥ ४ ॥

पताकादण्डा अपि वंशजा दशहस्तोच्छ्रिताः स्युः ॥ ध्वजादि दण्डानां पञ्चांशमानेन भुवि निक्षेपः स्तम्भवत् कार्य्यः ॥

अपि चाहुः— चूतपल्लवमालाढ्यं वितानैरुपशोभितम् ।
विचित्रवस्त्रसंछन्नं घंटाभिश्च विराजितम् ॥ १ ॥
सफलैः कदलीस्तम्भैः क्रमुकैर्नारिकेलकैः ।
फलैर्नानाविधैर्भोज्यैर्दर्पणैश्चामरैरपि ॥ २ ॥
भूषितं मण्डपं कुर्य्यान्नानापुष्पसुशोभितम् ।
कलशैर्घटिकाभिश्च साधारैः करकैस्तथा ॥ ३ ॥



## अथ वेदीविधानम् ॥ ५ ॥

इदं मण्डपक्षेत्रं पूर्वापरतो दक्षिणोत्तरतश्च त्रेधा विभज्य मध्यमे भागे इष्टकाभिश्चिता समा चतुरस्रा वेदी निर्मातव्या ।

दर्पणोदरसंकाशा निम्नोन्नतविवर्जिता ।
शुभाकारा च या वेदी कर्तुः कामफलप्रदा ॥ १ ॥
वक्रपार्श्वा क्लिष्टमध्या परुषा दृगशोभना ।
मानहीनाधिका वेदी कर्तुः कामविनाशिनी ॥ २ ॥
पक्वाभिर्वाप्यपक्वाभिरिष्टकाभिर्दृढं यथा ।
चतुरस्रा चतुःकोणा तदभावे मृदापि वा ॥ ३ ॥
एवं त्र्यंगुलैर्हीना क्षत्रविट् शूद्रजन्मनाम् ।
सिद्धान्तशेखरे त्वेषा वेदी प्रोक्ता चतुर्विधा ॥ ४ ॥
श्रीधरी सर्वतोभद्रा चतुरस्रा च पद्मिनी ।
विवाहे श्रीधरी वेदी त्रिंशत्यस्रसमन्विता ॥ ५ ॥
राज्ञां स्यात् सर्वतोभद्रा चतुर्भद्राभिषेचने ।
तडागादिप्रतिष्ठायां पद्मिनी पद्मसंनिभा ॥ ६ ॥
चतुरस्रा चतुःकोणा वेदी सर्वफलप्रदा ।
मण्डपस्य नवांशस्तु वेदी स्यान्मध्यवर्तिनी ॥ ७ ॥

तस्या उच्छ्रायो वेदीविस्तारस्य तृतीयेन चतुर्थेन पञ्चमेन सप्तमेन नवमेनैकादशेन वांशेन कार्य्यः ॥ तुलादानादिकर्मणि त्विष्टकामयी चतुर्थांशोच्छ्रिता सा वेदिरुत्तममण्डपे सप्तहस्ता, मध्यमाधमयोस्तु पञ्चहस्ता कार्य्येति व्यवस्थितविकल्पमाह । मत्स्यपुराणे—

सप्तहस्ता भवेद्वेदी मध्ये पञ्चकराऽथवा ।
तन्मध्ये तोरणं कुर्य्यात् सारदारुमयं शुभम् ॥ इति ॥

तुलावलम्बनार्थं काष्ठदण्डे तोरणाकृतित्वादिह तोरणशब्दः ॥ कर्मविशेषे पुनरियं वेदी मण्डपस्यैशान्यामपीष्यते । तदुक्तं विधानपारिजाते—

तुलापुरुषदानादौ मध्यभागे तु वेदिका ।
शान्तिके पौष्टिके विप्र शिवकोणे प्रशस्यते ॥ १ ॥
चतुर्थांशोच्छ्रितिस्तस्या राजहस्तोच्छ्रयोऽथवा ।
राजहस्तो मतो विंशत्यंगुलैरेव संमितः ॥ २ ॥
चतुर्विंशत्यंगुलस्तु वंशहस्तो विधीयते ।
षण्णवत्यांगुलैरेवं दण्डहस्तो मतो बुधैः ॥ ३ ॥
अष्टादशाङ्गुलोऽप्यन्यः स्वामिहस्तः क्वचिन्मतः ।
ईशानकोणगा वेदी राजहस्तोच्छ्रिता मता ॥ ४ ॥

## अथ कुण्डविधानम् ॥ ६ ॥

स्थानं मानं क्षेत्रं खातो नाभ्योष्ठ मेखला योनिः ।
इत्यष्टाङ्गं कुण्डं भवति स्मार्तस्य कर्म्मणः सिद्ध्यै ॥ १ ॥

## तत्रादौ स्थानसाधनम् ॥ १ ॥

कुण्डमाकारभेदाद्दशधा—चतुरस्रं, त्र्यस्रं, पञ्चास्रं, षडस्रं, सप्तास्रमष्टास्रं, पद्मं, वृत्तमर्द्धचन्द्रं, योनिकुण्डं चेति । तत्र कामनाविशेषात् कुण्डविशेषोऽपेक्ष्यते । पुत्रेष्टौ योनिकुण्डं, शुभकर्म्मस्वर्द्धचन्द्रं, शान्तिकर्मणि वृत्तं, पुष्ट्यर्थयागे पद्मं, रोगशमनेऽष्टास्रम्, अभिचारशान्तौ सप्तकोणं, मारणच्छेदनयोः षडस्रं, भूतोत्सादने पञ्चास्रं, शत्रुदमने त्र्यश्रि कुर्य्यात् । चतुरस्रे तु सर्वार्थसिद्धिरिति । एतच्च वेदीमकृत्वा यत्रैकमेव कुण्डं कुर्वन्ति तत्र नेयम् । वेदीसहकारेण तु कुण्डकरणे वेद्यनुसारादेव कुण्डानाम् । कामना भेदेन दिग्विशेषे कर्तव्यता नियम्यते । तथा हि—

चतुरस्रं शत्रुस्तम्भे पूर्वस्यां कार्य्यम् । योनिर्भोगार्थमाग्नेय्याम् । अर्द्धचन्द्रं शत्रुमारणे दक्षिणस्याम् । त्रिकोणं विद्वेषणे नैर्ऋत्याम् । वृत्तं शान्तिकर्मणि पश्चिमे कुर्य्यात् । बह्वृचपरिशिष्टे त्वन्यत्रापि कामनाविशेषे वृत्तकुण्डं वेद्याः पश्चिमतो विधीयते—

भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे विशेषतः ।
सदा होमे तथा शान्तौ वृत्तं वरुणदिग्गतम् ॥ इति ॥

षडस्रमुच्चाटनार्थं वायव्ये । पद्मं पुष्टिकर्मण्युत्तरस्याम् । अष्टास्रं मोक्षार्थे शान्यामित्यष्टकुण्डानि । कामनाभेदादेकमेकं कुण्डं वेदीतो नियते दिग्विशेषे कुर्य्यात् । सर्वकामस्तु नवकुण्डीं कुर्य्यात् । परे त्वाहुः—नवकुण्डीकरणे तावच्चतुरस्रादीनां पूर्वादिक्रमेणैषा दिग्व्यवस्था कार्य्या । यत्रत्वेकमेव कुण्डमिष्यते तत्र सर्वास्वपि कामनासु वेद्याः पश्चिम एव चतुरस्रं वृत्तं वा कुण्डं रचयेत् । द्विकुण्डीकरणे दक्षिणपश्चिमयोः । त्रिकुण्डीकरणे पूर्वदक्षिणपश्चिमेषु । चतुष्कुण्डीकरणे चतुर्दिक्षु क्रमेण चतुरस्रमर्द्धचन्द्रं वृत्तं पद्मं च कुर्य्यात्; इति नारदीये । चतुरस्रमेव वेत्यन्ये । पञ्चकुण्डी चेदपेक्ष्यते तर्हि चतुर्दिक्षु कृत्वा पूर्वैशान्यन्तराले पञ्चमं कुर्य्यात् । इति कुण्डप्रदीपकृदाह ॥ ऐशान्यां पञ्चमं कुर्य्यादिति ज्ञानरत्नावल्यामाम्नायरहस्ये विधानपारिजाते चाहुः । नवकुण्डीविधौ स्वष्टदिक्षु कृत्वा पूर्वैशान्योरन्तराले नवमं तदाचार्य्यकुण्डं कुर्य्यादित्यूह्यम् । एतच्च वृत्तं वा चतुरस्रं वेत्युक्तं विधानपारिजाते ॥ काम्यादन्यत्र तु नित्यनैमित्तिकादौ वर्णभेदात् कुण्डव्यवस्था नेया । ब्राह्मणानां चतुरस्रं पूर्वतः । क्षत्रियाणां वृत्तं पश्चिमतः । वैश्यानामर्द्धचन्द्रं दक्षिणतः । शूद्राणां त्रिकोणं नैर्ऋत्यामिति प्रतिवर्णं दिग्भेदेन कुण्डभेदा निरूपिताः ॥

सर्वाण्येवैतानि कुण्डानि वेद्याः सकाशात् पदमात्रमन्तरं कृत्वा तत्तद्दिशि रच्यन्ते । पदं द्वादशाङ्गुलम् ॥ विधानपारिजाते तु त्रयोदशांगुलमन्तरमिष्यते ।

त्रयोदशाङ्गुलं त्यक्त्वा वेदिकायाश्चतुर्दिशम् ।
कुण्डानि गणनोक्तानि विदध्याद् विधिवद्गुरुः ॥१॥ इत्युक्तेः ।

केचित्वाहुः—वेदीस्तम्भमण्डपस्तम्भयोरन्तरतः कुण्डानि कुर्य्यादिति । तेषामपि वेद्या पदान्तर एव तात्पर्य्यं नेयम् । नारदीये तु—

कुण्डवेद्यन्तरं चैव सपादकरसंमितम् ।

इत्युक्तेस्त्रिंशदंगुलमन्तरमिष्यते; तत्कुण्डक्षेत्रगर्भाभिप्रायं तुलादानादिकर्म्मविषयं वा नेयम् । वेदीगर्भादष्टासु दिक्ष्वष्टौ रेखाः कृत्वा तत्तद्रेखायां तत्तत्कुण्डगर्भं प्रकल्प्य कुण्डानि निर्म्मातव्यानि । येन दिग्विरोधो न भवेत् तथा कुण्डरचना कार्य्या । विनापि कुण्डं वेद्यामेव केचिद्धोमं कुर्वन्ति । विनापि वेदीं कुण्डमात्रेण होमसिद्धिं केचिदिच्छन्ति । तेषां मण्डपमध्ये वेदीस्थाने कुण्डरचना भवतीति विशेषः ॥




## अथ मानसाधनम् ॥ २ ॥

दर्शिता स्थानसंपत्तिः । अथ क्रमप्राप्ता मानसंपत्तिर्दर्शयितव्या । तत्राहुति संख्यया कुण्डमानं नियम्यते । दशहोमे पदमात्रम् । पञ्चाशद्धोमे तु रत्निमात्रम् । शतहोमे सत्यरत्निमात्रम् । सहस्रहोमे हस्तमात्रम् । अयुतहोमे द्विहस्तम् । पञ्चायुतहोमे त्रिहस्तम् । लक्षहोमे चतुर्हस्तम् । प्रयुतहोमे षड्ढस्तम् । पञ्चप्रयुते सप्तहस्तम् । कोटिहोमे चाष्टहस्तम् । नातः परं हस्तवृद्धिः ॥ तेन दशकोटिहोमेऽप्यष्टहस्तमेव स्यादित्याहुः ॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| आहुतिमानम् | दश | पंचाशत | शतम् | सहस्रम् | अयुतम् | पंचायुतम् | लक्षम् | प्रयुतम् | पंचप्रयुतम् | कोटिः |
| | १० | ५० | १०० | १००० | १०००० | ५०००० | १००००० | १०००००० | ५०००००० | १००००००० |
| कुण्डे हस्तमानम् | पदम् | रत्निः | अरत्निः | हस्तः | द्विहस्तौ | त्रयोहस्ताः | चत्वारोहस्ताः | षड्ढस्ताः | सप्तहस्ताः | अष्टहस्ताः |
| | ॥ | १ | १ | १ | २ | ३ | ४ | ६ | ७ | ८ |
| कुण्डेऽङ्गुलमानम् | १२ | २१ | २२॥ | २४ | ३४ | ४१।७ | ४८ | ५८।७ | ६३।४ | ६७।७ |

विधानपारिजातादिषु विशेषो यथा—

प्रोक्तं पंचकरं कुंडं दशलक्षाहुतिष्वपि ।
षड्ढस्तं लक्षविंशत्यां कोट्यर्द्धे सप्तहस्तकम् ॥ १ ॥
कोटिहोमे दशकरं प्रोक्तं कुंडं महर्षिभिः ।
दशहस्तान्न हि परं कुण्डमास्ति महीतले ॥ २ ॥ इति ॥

केचित्तु लक्षहोमे हस्तमात्रम्, द्विलक्षे द्विहस्तम्, त्रिलक्षे त्रिहस्तमित्येवं लक्षशो हस्तवृद्धिव्यवस्थया दशलक्षे दशहस्तं स्यात्। नातःपरं हस्तवृद्धिः। तेन कोटिहोमेऽपि दशहस्तमेव स्यादित्याहुः ॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| आहुति संख्या | १००००० | २००००० | ३००००० | ४००००० | ५००००० | ६००००० | ७००००० | ८००००० | ९००००० | १०००००० |
| कुण्डहस्ताः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |

केचित्पुनः--अयुते त्वथ होतव्ये कुण्डं स्याद्धस्तमात्रकम् ।
द्विगुणं लक्षहोमे तु कोटिहोमे चतुर्गुणम् ॥ १ ॥

इत्यादिवचनात् कोटिहोमे चतुर्हस्तं कुण्डमाहुः । स्कान्दे तु समन्ततश्चतुर्हस्तप्रयुक्त्या षोडशहस्तक्षेत्रफलं कुण्डं कोटिहोमे वदन्ति । घृतादिशीघ्रदाहिवस्तुभेदाद्धोम्यवस्तु स्थौल्यादितारतम्यानुरोधाच्चैते मतभेदा यथायथं नेयाः । अर्थात् परिमाणमिति कात्यायनपरिभाषोक्तेर्होमीयद्रव्यसंभारयोग्यतानुसारेणैव कुण्डमानतारतम्यस्य नियन्तव्यत्वात् ॥

इदं त्वत्रावधेयम् । हस्तमात्रकुण्डस्यैकैको भुजश्चतुर्विंशत्यङ्गुलो भवति । किन्तु द्विहस्तकुण्डस्य स एकैको भुजो नाष्टाचत्वारिंशदङ्गुलो भवति । तावद्भुजकरणे कुण्डस्य चतुर्हस्तत्वसंपत्तेः ॥ तस्माद् द्विहस्तादि विज्ञानार्थं प्रकारमाह शुल्वसूत्रे—समचतुरस्रस्याक्ष्णया रज्जुर्द्विकरणीति । एतदेवोक्तमन्यत्रापि, यथा—

पूर्वपूर्वस्य कुण्डस्य कोणसूत्रेण निर्म्मितम् ।
उत्तरोत्तरकुण्डानां मानं तत्परिकीर्तितम् ॥ इति यामले ।
पूर्वकुण्डश्रवः कोटिरुत्तरस्येति कल्पना ।
विज्ञेया सर्वदा तज्ज्ञैर्द्विहस्तादि विधिस्त्वयम् ॥ १ ॥

इति शारदातिलके ।

चतुः कोणाक्ष्णया रज्जुः करणी यत्र जायते ।
फलं द्विगुणितं तत्र चतुरस्रे समीरितम् ॥

इति कुण्डरत्नाकरे ॥ यथाकथंचिद् हस्तमितस्य चतुरस्रक्षेत्रस्यैशाननैर्ऋतकोणे दत्तसूत्रेण यन्मानं स्यात् तत्ततो द्विगुणहस्तकुण्डस्य पारिभाषिकं मानं स्यात् । तेन मानेन कृतभुजं चतुरस्रक्षेत्रं पूर्वक्षेत्रापेक्षया द्विगुणं भवति ॥ अतएव एकहस्तकुण्डस्य कोणमानेन समं द्विहस्तकुण्डस्य भुजमानं स्यात् । एवं समचतुरस्रस्य द्विहस्तकुण्डस्य कोणसूत्रेण समा यस्य भुजाः स्युस्तच्चतुरस्रं चतुर्हस्तं स्यात् । तथा चतुर्हस्तकुण्डस्य कोणसूत्रेण समा यस्य भुजाः स्युस्तदष्टहस्तं स्यात् । एवमुत्तरेषामपि बोध्यम् । तत्रैकहस्तक्षेत्रस्य भुजमानं चतुर्विंशत्यंगुलानि चेत् तदा कोणस्य मानं कियदिति निर्णेतुं प्रयतन्ते । एके तावदाहुः—

समचतुरस्रक्षेत्रस्य भुजसप्तमांशैर्दशभिः समं कर्णसूत्रं भवति। अथवा कर्णदशमांशैः सप्तभिः समो भुजो भवति। यथा–चतुर्विंशत्यंगुलभुजके समचतुर्भुजक्षेत्रे त्रीण्यंगुलानि, त्रयो यवाः, तिस्रो यूकाः। तिस्रो लिक्षाः, त्रीणि वालाग्राणि, त्रयो वालाग्रस्य सप्तमांशाश्चेत्येतावान् भुजसप्तमांशः स्यात्। तैर्दशभिस्तुल्यं तत्र कर्णसूत्रं स्यात्। सप्तभिः सप्तमांशैः सिद्धस्य भुजस्यापेक्षया त्रिभिः सप्तमांशैस्तत्कर्णस्य वर्द्धमानत्वात्। तथा हि सप्तमांशसप्तके षट्सु स्थानेष्वंगुलयवादिरूपेष्वेकविंशत्यङ्काः पृथक्कार्य्याः। तत्र तावद् वालाग्रसप्तमांशस्यैकविंशत्या त्रीणि वालाग्राणि लभ्यन्ते। तद्योगात् सिद्धया वालाग्रचतुर्विंशत्या तिस्रो लिक्षा लभ्यन्ते। तद्योगात् सिद्धया लिक्षाचतुर्विंशत्या तिस्रो यूका लभ्यन्ते। तद्योगात् सिद्धया यूकाचतुर्विंशत्या त्रयो यवा लभ्यन्ते। तद्योगादंगुलानां चतुर्विंशतिर्भुजमानं संपद्यते॥ अत्रैव सप्तमांशत्रयवृद्धौ तत्कर्णो भवति। तद्यथा–षट्सु स्थानेष्वंगुलयवादिरूपेषु नवाङ्काः पृथक् कार्य्याः। तत्र नवभ्यो वालाग्रसप्तमांशेभ्यो द्वयमवशेष्य सप्तभिरेकं वालाग्रं लभ्यते। तद्योगात् दशभ्यो वालाग्रेभ्यो द्वयमवशेष्याष्टाभिरेका लिक्षा लभ्यते। तद्योगाद्दशभ्यो लिक्षाभ्यो द्वयमशेष्याष्टभिरेका यूका स्यात्। तद्योगाद्दशभ्यो यूकाभ्यो द्वयमवशेष्याष्टभिरेको यवो लभ्यते। तद्योगाद्दशांगुलानि स्युः। तथा च दशांगुलानि, द्वौ यवौ, द्वे यूके, द्वे लिक्षे, द्वे वालाग्रे, द्वौ वालाग्रसप्तमांशौ चेत्येतावतो वर्द्धनांशस्य योगात् चतुस्त्रिंशदंगुलानि यव-यूका-लिक्षा-वालाग्र तत्सप्तमांशानां द्वयं द्वयं चेत्येतावत्कर्णमानं संपद्यते। एवं तत्कर्णस्य दशमांशोऽपि भुजसप्तमांशवदंगुलादीनां त्रयं त्रयं भवति। तैर्दशमांशैरपि सप्तभिः कृतं भुजमानं चतुर्विंशत्यंगुलं निष्कृष्यते। स्पष्टप्रतिपत्तये न्यासो यथा–हस्तमात्रक्षेत्रे तावत्—

| | अंगुलानि | यवः | यूकाः | लिक्षाः | वालाग्राणि | सप्तमां. |
|---|---|---|---|---|---|---|
| भुजमानम् ... ... | २४ | ० | ० | ० | ० | ० |
| भुजसप्तमांशः .... | ३ | ३ | ३ | ३ | ३ | ३ |
| भुजसप्तमांशसप्तकम् .... | २१ | २१ | २१ | २१ | २१ | २१ |
| तस्य योगरूपम् .... | २४ | ० | ० | ० | ० | ० |
| भुजसप्तमांशत्रिकम् .... | ९ | ९ | ९ | ९ | ९ | ९ |
| तस्य योगरूपम् .... | १० | २ | २ | २ | २ | २ |
| सप्तकत्रिकयोगात्कर्णमानम् | ३४ | २ | २ | २ | २ | २ |
| एतत्कर्णदशमांशः .... | ३ | ३ | ३ | ३ | ३ | ३ |
| कर्णदशमांशसप्तकम् | २१ | २१ | २१ | २१ | २१ | २१ |
| तस्य योगरूपम् .... | २४ | ० | ० | ० | ० | ० |

एवमेव द्विहस्तक्षेत्रे द्रष्टव्यम् । भुजमानं पूर्वकर्णवत् । भुजसप्तमांशश्चत्वारि सप्तैका तिस्रः षट् च । भुजसप्तमांश सप्तकं त्वष्टाविंशतिरूनपञ्चाशत् सप्तैकविंशतिर्द्वाचत्वारिंशद् द्वौ चेति । तस्य योगरूपं तु भुजमानम् । तथा भुजसप्तमांशत्रिकं द्वादशैकविंशतिस्तिस्रो नवाष्टदश चेति । तस्य योगरूपं तु चतुर्दश पञ्च चतस्रस्तिस्रो द्वे एकश्चेति । सप्तकत्रिकयोर्योगस्तु अष्टचत्वारिंशत् सप्त षट् पञ्च चत्वारि त्रय इति । एतदेवेह कर्णमानं स्यात् । तद्दशमांशो भुजसप्तमांशवत् । तत्सप्तकं तु भुजमानं निष्क्रष्यते । स्पष्टप्रतिपत्तये तस्यापि न्यासो यथा—

| | अं० | य० | यू० | लि० | वा० | स० |
|---|---|---|---|---|---|---|
| भुजमानम् ... ... | ३४ | २ | २ | २ | २ | २ |
| भुजसप्तमांशः ... | ४ | ७ | १ | ३ | ६ | ऽ |
| भुजसप्तमांशसप्तकम् | २८ | ४९ | ७ | २१ | ४२ | २ |
| तस्य योगरूपम् ... | ३४ | २ | २ | २ | २ | २ |
| भुजसप्तमांशत्रिकम् ... | १२ | २१ | ३ | ९ | १८ | ऽ |
| तस्य योगरूपम् ... | १४ | ५ | ४ | ३ | २ | १ |
| सप्तकत्रिकयोर्योगः कर्णमानं | ४८ | ७ | ६ | ५ | ४ | ३ |
| एतत्कर्णदशमांशः ... | ४ | ७ | १ | ३ | ६ | ऽ |
| कर्णदशमांशसप्तकम् | २८ | ४९ | ७ | २१ | ४२ | २ |
| तस्य योगरूपम् ... | ३४ | २ | २ | २ | २ | २ |

एवं चतुर्हस्तक्षेत्रे भुजमानं द्विहस्तक्षेत्रीयकर्णवत्। तत्सप्तमांशः षट् सप्त सप्त षट् चत्वारि चेति। तत्त्रिकमष्टादशैकविंशतिः पुनरेकविंशतिरष्टादश द्वादश चेति। तस्य योगरूपं विंशतिः सप्त पुनः सप्त तिस्रश्चत्वारि चेति। एतावतोंशस्य भुजमाने योगादूनसप्तत्यंगुलानि, सप्त यवाः, षड् यूकाः, एका लिक्षा चेत्येतावत्कर्णमानं संपद्यते ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| तदित्थमेकहस्तक्षेत्रे | भुजमानम् | .... | २४ | ० | ० | ० | ० | ० |
| | कर्णमानम् | .... | ३४ | २ | २ | २ | २ | २ |
| | अन्तरम् | .... | १० | २ | २ | २ | २ | २ |
| द्विहस्तक्षेत्रे | भुजमानम् | .... | ३४ | २ | २ | २ | २ | २ |
| | कर्णमानम् | .... | ४८ | ७ | ६ | ५ | ४ | ३ |
| | अन्तरम् | ... | १४ | ५ | ४ | ३ | २ | १ |
| चतुर्हस्तक्षेत्रे | भुजमानम् | ... | ४८ | ७ | ६ | ५ | ४ | ३ |
| | कर्णमानम् | ... | ६९ | ७ | ६ | १ | ० | ० |
| | अन्तरम् | ... | २० | ७ | ७ | ३ | ४ | ऽ |

## केचित्तु किञ्चिन्न्यूनाधिकपरिमाणमपि ब्रुवते ।

तथा च हस्तचतुरस्रक्षेत्रीयकर्णतुल्यभुजस्य द्विहस्तत्वे तस्य भुजो हस्तमात्रीयात् प्रथमाद् भुजात् त्रिभिर्भुजसप्तमांशैर्वर्द्धते । तस्य कर्णसूत्रं च प्रथमकर्णसूत्रात् त्रिभिः कर्णदशमांशैर्वर्द्धते । अथैतादृशकर्णसमेन भुजेन चतुरस्रनिर्माणे तस्य भुजो हस्तमात्रीयात् प्रथमाद् भुजात् सप्तभिः सप्तमांशैर्वर्द्धते । तस्य कर्णसूत्रं च प्रथमकर्णसूत्राद्दशभिर्दशमांशैर्वर्द्धते । तथा चेदं तृतीयं चतुरस्रं भुजतः कर्णतश्च प्रथमचतुरस्राद् द्वैगुण्येन प्रायः संपद्यते इति भुजेनाष्टाचत्वारिंशदङ्गुलेनः कृतस्यास्य तृतीय चतुरस्रस्य चतुर्हस्तत्वं बोध्यमिति ॥ एतच्चाशुद्धम् । चतुर्विंशत्यंगुलभुजस्य समचतुरस्रस्य यथैकहस्तत्वं तथैवाष्टचत्वारिंशदंगुलभुजस्य समचतुरस्रस्य चतुर्हस्तत्वमिष्यते । उक्तरीत्या तु चतुर्भिर्वालाग्रैः पञ्चभिर्लिक्षाभिः षड्भिर्यूकाभिः सप्तभिरंगुलैः सावयवस्य तस्य चतुर्हस्तत्वं प्राप्नोतीति वैषम्यं

भवति । तस्मान्नैव प्रकारः साधीयान् ॥ वस्तुतस्तु भुजवर्ग-कोटिवर्गयोर्योगाङ्कस्य मूलं कर्णमानं भवतीत्याहुः । यथा-हस्तमात्रे क्षेत्रे भुजस्य चतुर्विंशत्यङ्गुलात्मकतया तद्वर्गः षट्सप्ततानि पञ्चशतानि । भुजकोट्योस्तत्र समानतया कोटिवर्गोऽपि तावानेव । तयोर्योगाङ्को द्वापञ्चाशान्येकादशशतानि । तन्मूलं चतुस्त्रिंशदासन्नं किञ्चिन्न्यूनं भवति । चतुस्त्रिंशद्वर्गस्य षट्पञ्चाशैरेकादशशतैस्तुल्यत्वात् एतच्च विज्ञानोपपन्नं भवति। अथापि यत्कोणमानेन तुल्यं यस्य भुजमानं तत्क्षेत्रं तत्क्षेत्रापेक्षया द्विगुणमिति वस्तुभूतोऽप्यर्थः क्षेत्रफलविज्ञानादेवोपपद्यते । तस्मादिह द्विहस्तादि कुण्डमानानि क्षेत्रफलविज्ञानात् स्फुटं साधनीयानि । क्षेत्रफलमूलाङ्कस्यैव क्षेत्रभुजमानत्वात् ॥ तथा हि—चतुरस्रक्षेत्रे विस्तारकृतिः क्षेत्रफलं भवति। विस्तारस्य दैर्घ्यघातेन क्षेत्रमानस्य सुग्रहत्वात्। तथा चात्र चतुर्विंशत्यङ्गुलो हस्त इति कृत्वा, हस्तमात्रस्य षट्सप्ततानि पञ्चाङ्गुलशतानि क्षेत्रफलं स्यात् ॥ ५७६ ॥ एतान्येव द्विगुणित त्रिगुणितादिक्रमेण द्विहस्तत्रिहस्तादि क्षेत्राणां फलानि स्युः। यथा हि द्विहस्तस्य द्वापञ्चाशान्येकादशाङ्गुलशतानि ॥ ११५२ ॥ त्रिहस्तस्याष्टाविंशानि सप्तदशाङ्गुलशतानि ॥ १७२८ ॥ चतुर्हस्तस्य चतुरुत्तराणि त्रयोविंशतिशतानि ॥ २३०४ ॥ पञ्चहस्तस्याशीतानि अष्टाविंशतिशतानि ॥ २८८० ॥ षड्ढस्तस्य षट्पञ्चाशानि चतुस्त्रिंशच्छतानि ॥ ३४५६ ॥ सप्तहस्तस्य द्वात्रिंशानि चत्वारिंशच्छतानि ॥ ४०३२ ॥ अष्टहस्तस्याष्टोत्तराणि षट्चत्वारिंशच्छतानि ॥ ४६०८ ॥ नवहस्तस्य चतुरशीतान्येकपंचाशच्छतानि ॥ ५१८४ ॥ दशहस्तस्य षष्ट्युत्तराणि सप्तपंचाशच्छतानि ॥ ५७६० ॥ षोडशहस्तस्य तु षोडशाधिकानि द्वानवति शतानि ॥ ६२१६ ॥ क्षेत्रफलं नेयानि।

| कुण्डहस्ताः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | १६ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| क्षेत्रफलानि | ५७६ | ११५२ | १७२८ | २३०४ | २८८० | ३४५६ | ४०३२ | ४६०८ | ५१८४ | ५७६० | ६२१६ |

एवमेव क्षेत्रफलानां वर्गात्मकानां यानि मूलानि तान्येव तत्तत्कुण्डानां तत्तद्भुजमानानि स्युः। तद्यथा-अङ्गुलानां चतुर्विंशतिरेकहस्तस्य ॥ ( २४ ) ॥ त्रयस्त्रिंशदंगुलानि, सप्तयवाश्चतस्रो यूका एका लिक्षा, षड्वालाग्राणीति द्विहस्तस्य ( ३३ । ७ । ४ । १ । ६ ) ॥ एकचत्वारिंशदंगुलानि, चत्वारो यवाः,

चतस्रो यूकास्तिस्रो लिक्षा स्त्रीणि वालाग्राणीति त्रिहस्तस्य ( ४१ । ४ । ४ । ३ । ३ ) ॥ अष्टचत्वारिंशदंगुलानि चतुर्हस्तस्य ( ४८ ) ॥ त्रिपञ्चाशदंगुलानि, पंच यवा, द्वे यूके, षड्लिक्षा इति पंचहस्तस्य । ( ५३ । ५ । २ । ६ । ० ) ॥ अष्टपंचाशदंगुलानि, षड्यवा, द्वे यूके, तिस्रो लिक्षाश्चत्वारि वालाग्राणीति षड्हस्तस्य ( ५८ । ६ । २ । ३ । ४ ) ॥ त्रिषष्ट्यङ्गुलानि, चत्वारो यवाः सप्तहस्तस्य । ( ६३ । ४ । ० । ० । ० ) ॥ सप्तषष्ट्यङ्गुलानि, सप्त यवाः, षड् लिक्षा अष्टहस्तस्य । ( ६७ । ७ । ० । ६ । ० ) ॥ द्वासप्तत्यङ्गुलानि नवहस्तस्य । ( ७२ । ० । ० । ० । ० ) ॥ पंचसप्तत्यङ्गुलानि, सप्तयवास्तिस्रो यूका दशहस्तस्येति दिक् । ( ७५ । ७ । ३ । ० । ० ) ॥

| कुण्डहस्ता | | | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| क्षेत्रफलानि | | | ५७६ | ११५२ | १७२८ | २३०४ | २८८० | ३४५६ | ४०३२ | ४६०८ | ५१८४ | ५७६० |
| क्षेत्रफलमूलाङ्कानि | कुण्डानां भुजमानानि | अंगुलानि | २४ | ३३ | ४१ | ४८ | ५३ | ५८ | ६३ | ६७ | ७२ | ७५ |
| | | यवाः | ० | ७ | ४ | ० | ५ | ६ | ४ | ७ | ० | ७ |
| | | यूकाः | ० | ४ | ४ | ० | २ | २ | ० | ० | ० | ३ |
| | | लिक्षाः | ० | १ | ३ | ० | ६ | ३ | ० | ६ | ० | ० |
| | | वालाग्राणि | ० | ६ | ३ | ० | ० | ४ | ० | ० | ० | ० |

तथा च—यावद्धस्तमितं कुण्डमभिप्रेतं स्यात् तेन हस्ताङ्केन हस्तमात्रकुण्डक्षेत्रफलं गुणयेत् । तदेव तावद्धस्तकुण्डस्य क्षेत्रफलं स्यात् । यथा चतुर्हस्तकुण्डेऽभिप्रेते हस्तकुण्डक्षेत्रफलं षट्सप्तत्यधिकपंचशतात्मकं चतुर्गुणितं चतुरधिकत्रयोविंशतिशतात्मकं भवति । तच्चतुर्हस्तस्य क्षेत्रफलं स्यात् । तन्मूलं त्वष्टाचत्वारिंशदंगुलानि चतुर्हस्तकुण्डस्य भुजमानं स्यादित्येवमूह्यम् ॥ यत्त्वेषां न्यूनाधिकपरिमाणं भुजमानं क्वचित्पठ्यते तद्गणनासौकर्य्याय स्थूलं स्थूलतरं वा

द्रष्टव्यम् । यथा शारदातिलके द्विहस्ते त्रिहस्ते पञ्चहस्ते षड्ढस्तेऽष्टहस्ते च लिक्षाश्चतस्र उक्ताः । पञ्चहस्ते यूका नोक्ता । षड्ढस्ते यवौ द्वौ । दशहस्ते तु यूकैका लिक्षैका । वालाग्रं तु सर्वेष्वेवोपेक्षितम् । तथा च न्यासः ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | हस्तमानानि |
| २४ | ३३ | ४१ | ४८ | ५३ | ५८ | ६३ | ६७ | ७२ | ७५ | अंगुलानि |
| ० | ७ | ४ | ० | ५ | ६ | ४ | ७ | ० | ७ | यवाः |
| ० | ४ | ४ | ० | ० | २ | ० | ० | ० | १ | यूकाः |
| ० | ४ | ४ | ० | ४ | ४ | ० | ४ | ० | १ | लिक्षाः |

एवं कुण्डप्रदीपे द्विहस्तस्य त्रयस्त्रिंशत् सप्त पञ्चेति ( ३३ । ७ । ५ )। त्रिहस्तस्यैकचत्वारिंशच्चत्वारः पञ्चेति ( ४१ । ४ । ५ ) । पञ्चहस्तस्य त्रिपञ्चाशत् पञ्चतिस्र इति ( ५३ । ५ । ३ ) । षड्ढस्तस्याष्टपञ्चाशत् षट् द्वे चतस्र इति च ( ५८ । ६ । २ । ४ ) भुजमानान्युक्तानि ॥ कश्चित्तु पञ्चहस्तस्य त्रिपञ्चाशदंगुलानि, चतस्रो यूकाः, एका लिक्षा, षड्वालाग्राणि इत्येवं ( ५३ । ० । ४ । १ । ६ ) यवपरित्यागेन भुजमानमुच्यते । एवं कुण्डप्रकाशिकायां द्विहस्तस्य चतुस्त्रिंशदङ्गुलात्मकं भुजमानमुक्तं तदतिस्थूलम् । सूक्ष्मानादरेण सौकर्य्याय तथोक्तेः ॥ एवमुत्तरत्रापि फलभेदा उपेक्ष्याः ॥

अथ निरुक्तैतत्संख्या न्यूनाधिकसंख्याकहोमप्रयुयुक्षायां तु पूर्वापरसंख्यानुपातेन कुण्डमानं कल्प्यते । यथा—चतुःसहस्रहोमे चिकीर्षिते पूर्वसंख्या सहस्रम् । सहस्रहोमे हस्तमात्रस्य कुण्डस्य क्षेत्रफलं षट्सप्ततानि पञ्चाङ्गुलशतानि ( ५७६ ) उत्तरसंख्या त्वयुतम् । अयुतहोमे द्विहस्तकुण्डस्य क्षेत्रफलं द्वापञ्चाशान्येकादशाङ्गुलशतानि ( ११५२ ) तथा च नवसहस्रात्मके पूर्वापरसंख्यान्तरे यदि षट्सप्ततानि पञ्चाङ्गुलशतानि क्षेत्रफलतया लभ्यन्ते तदा त्रिसहस्रात्मकेऽन्तरे कियल्लभ्यमित्यनुपातेन द्वानवतं शतं ( १९२ ) प्रमाणान्तरं लभ्यते । तत्र षट्सप्तत्युत्तरपञ्चशतयोगादष्टषष्ट्युत्तरसप्तशती ( ७६८ ) क्षेत्रफलं भवति । तस्य च वर्गात्मकस्य मूलं सप्तविंशत्यङ्गुलानि, पञ्च

यवाः, पञ्च यूकाः, पञ्च लिक्षाः स्युः । ( २७ । ५ । ५ । ५ ) तदेवात्र चतुःसहस्रहोमे कुण्डमानमिति सिद्धम् ॥

एवमेवान्यत्रान्यत्रापि न्यूनाधिकसंख्यायां कुण्डमानं संपद्यते । तत्र कानिचिदङ्गुलयवयूकालिक्षावालाग्रक्रमेण प्रदर्श्यन्ते ॥ दशहोमे द्वादशाङ्गुलम् । विंशतिहोमे चतुर्दश षडेकं द्वे द्वे च । त्रिंशद्धोमे सप्तदश शून्यं षट् तिस्रो द्वे च । चत्वारिंशद्धोमे ऊनविंशतिरेकमेकं पञ्च त्रीणि च । पञ्चाशद्धोमे एकविंशतिरिति । षष्टिहोमे एकविंशतिर्द्वौतिस्रः षट् षट् च । सप्ततिहोमे एकविंशतिश्चत्वारः सप्तैका त्रीणि च । अशीतिहोमे एकविंशतिः सप्त द्वे तिस्र इति । नवतिहोमे द्वाविंशतिरेकः पञ्चतिस्रश्चत्वारि च ॥

## अथ शतहोमे द्वाविंशतिश्चत्वार इति ।

द्विशतहोमे द्वाविंशतिः पञ्च द्वे सप्तेति ॥ त्रिशतहोमे द्वाविंशतिः षट् पञ्च षडिति । चतुःशतहोमे त्रयोविंशतिः शून्यं शून्यं पञ्चेति । पञ्चशतहोमे त्रयोविंशतिरेकास्तिस्रस्तिस्र एकश्च । षट्शतहोमे त्रयोविंशतिर्द्वौ षट् शून्यं पञ्च च । सप्तशतहोमे त्रयोविंशतिश्चत्वारः शून्यं पञ्चैकं च । अष्टशतहोमे त्रयोविंशतिः पञ्चतिस्र एका पञ्च च । नवशतहोमे त्रयोविंशतिः षट् पञ्च षडिति ॥

अथ सहस्रहोमे चतुर्विंशतिरिति । द्विसहस्रे पञ्चविंशतिर्द्वौ तिस्रः शून्यं पञ्च च । त्रिसहस्रे षड्विंशतिश्चत्वारो द्वे शून्यं सप्त च । चतुःसहस्रे सप्तविंशतिः पञ्च पञ्च पञ्चेति । पञ्चसहस्रेऽष्टाविंशतिः षट् षट् शून्यं पञ्च च । षट्सहस्रे ऊनत्रिंशतिः सप्ततिस्रश्चतस्र एकं च । सप्तसहस्रे त्रिंशत् सप्त षट् सप्त षट् च । अष्टसहस्रे द्वात्रिंशदिति । नवसहस्रे द्वात्रिंशत् सप्त सप्त शून्यं त्रीणि च ।

अथायुतहोमे त्रयस्त्रिंशत् सप्त चतस्र एकाषट् च । द्वययुते षट् त्रिंशदिति । त्र्ययुते सप्तत्रिंशत् सप्तचतस्रश्चतस्रः सप्त च । चतुरयुते ऊनचत्वारिंशत् षट् तिस्र एका चत्वारि च । पञ्चायुते एकचत्वारिंशच्चत्वारश्चतस्रस्तिस्रस्त्रीणि च । षडयुते द्विचत्वारिंशत् सप्ततिस्रः पञ्चैकं च । सप्तायुते चतुश्चत्वारिंशद्द्वौ शून्यं द्वे इति । अष्टायुते पञ्चचत्वारिंशच्चत्वारो द्वे द्वे त्रीणि च । नवायुते षट्चत्वारिंशत् षड द्वे एका सप्त च ।

अथ लक्षहोमेऽष्टचत्वारिंशदिति । द्विलक्षे ऊनपञ्चाशद्द्वौ चतस्र एका द्वे च । त्रिलक्षे पञ्चाशच्चत्वारः षडेकैकं च । चतुर्लक्षे एकपञ्चाशत् षट् षडेकैकं च । पञ्चलक्षे त्रिपञ्चाशच्छून्यं चतस्र एका षट् च । षड्लक्षे चतुःपञ्चाशद् द्वौ शून्यं पञ्चेति । सप्तलक्षे पञ्चपञ्चाशत् त्रयस्तिस्र एका पञ्च च । अष्टलक्षे षट्पञ्चाशच्चत्वारश्चतस्रास्तिस्रो द्वे च । नवलक्षे सप्तपञ्चाशद् द्वौ पञ्च षट् षट् च । अथ प्रयुतेऽष्टापञ्चाशत् षड् द्वे तिस्रश्चत्वारि चेति दिक् ॥

| आहुति संख्या | कुण्डभुजाङ्गुलमानम् | | | | | कुण्डस्य हस्तमानम् |
|---|---|---|---|---|---|---|
| | अं० | य० | यू० | लि० | वा० | |
| १० | १२ | ० | ० | ० | ० | हस्तार्द्धः |
| २० | १४ | ६ | १ | २ | २ | |
| ३० | १७ | ० | ६ | ३ | २ | |
| ४० | १६ | १ | १ | ५ | ३ | |
| ५० | २१ | ० | ० | ० | ० | रत्निहस्तः |
| ६० | २१ | २ | ३ | ६ | ६ | |
| ७० | २१ | ४ | ७ | १ | ३ | |
| ८० | २१ | ७ | २ | ३ | ० | |
| ९० | २२ | १ | ५ | ३ | ४ | |
| १०० | २२ | ४ | ० | ० | ० | |
| २०० | २२ | ५ | २ | ७ | ० | |
| ३०० | २२ | ६ | ५ | ६ | ० | |
| ४०० | २३ | ० | ० | ५ | ० | |
| ५०० | २३ | १ | ३ | ३ | १ | |
| ६०० | २३ | २ | ६ | ० | ५ | |

| आहुतिसंख्या | कुण्डभुजांगुलमानम् | | | | | कुण्डस्य हस्तमानम् |
|---|---|---|---|---|---|---|
| | अं० | य० | यू० | लि० | वा० | |
| ७०० | २३ | ४ | ० | ५ | १ | |
| ८०० | २३ | ५ | ३ | १ | ५ | |
| ९०० | २३ | ६ | ५ | ६ | ० | |
| १००० | २४ | ० | ० | ० | ० | एको हस्तः |
| २००० | २५ | २ | ३ | ० | ५ | |
| ३००० | २६ | ४ | २ | ० | ७ | |
| ४००० | २७ | ५ | ५ | ५ | ० | |
| ५००० | २८ | ६ | ६ | ० | ५ | |
| ६००० | २९ | ७ | ३ | ४ | १ | |
| ७००० | ३० | ७ | ६ | ७ | ६ | |
| ८ ०० | ३२ | ० | ० | ० | ० | |
| ९००० | ३२ | ७ | ७ | ० | ३ | |
| १०००० | ३३ | ७ | ४ | १ | ६ | द्वौ हस्तौ |
| २०००० | ३६ | ० | ० | ० | ० | |
| ३०००० | ३७ | ७ | ४ | ४ | ७ | |

| आहुतिसंख्या | कुण्डभुजांगुलमानम् | | | | | कुण्डस्य हस्तमानम् |
|---|---|---|---|---|---|---|
| | अं० | य० | यू० | लि० | वा० | |
| ४०००० | ३९ | ६ | ३ | १ | ४ | |
| ५०००० | ४१ | ४ | ४ | ३ | ३ | त्रयो हस्ताः |
| ६०००० | ४२ | ७ | ३ | ५ | १ | |
| ७०००० | ४४ | २ | ० | २ | ० | |
| ८०००० | ४५ | ४ | २ | २ | ३ | |
| ९०००० | ४६ | ६ | २ | १ | ७ | |
| १००००० | ४८ | ० | ० | ० | ० | चत्वारो हस्ताः |
| २००००० | ४९ | २ | ४ | १ | २ | |
| ३००००० | ५० | ४ | ६ | १ | १ | |
| ४००००० | ५१ | ६ | ६ | १ | १ | |
| ५००००० | ५३ | ० | ४ | ० | ६ | पञ्चहस्ताः |
| ६००००० | ५४ | २ | ० | ५ | ० | |
| ७.०००० | ५५ | ३ | ३ | १ | ५ | |
| ८००००० | ५६ | ४ | ४ | ३ | २ | |
| ९००००० | ५७ | २ | ५ | ६ | ६ | |
| १०००००० | ५८ | ६ | २ | ३ | ४ | षड्ढस्ताः |

इदं चतुरस्रकुण्डविषयं सर्वमुक्तम् । योन्यादिकुण्डेषु पुनरित्थं कार्य्यम् । यावन्तो हस्ता आहुतिसंख्यानुसारेण कुण्डे चिकीर्षिताः स्युस्तावद्धस्ताङ्गुलमितं मानदण्डं यजमानपञ्चमांशात्मकहस्ताङ्गुलैर्मित्वा समं संपादयेत् । तत्र मानदण्डे चतुर्विंशत्यंशकाः कार्य्याः । तदङ्गुलमानं स्यात् । तैरङ्गुलैः सार्द्धद्वियवाधिकत्रिंशदाद्यङ्गुलमानं कृत्वा योन्यादिकुण्डरचना कार्य्या । खातनाभिकण्ठमेखलायोनिरूपाणि पञ्चाङ्गान्यपि तेषु तैरेवाङ्गुलैः संपाद्यानि । इति दिक् ॥

एतच्च सर्वविधकुण्डानां न्यूनाधिकमानसंपादनं ध्वजादिशुभाय संपत्त्यर्थं क्रियते । अष्टौ ह्याया वास्तुशास्त्रे निरूपिताः ।

आयो दैर्घ्यहतव्यासेऽष्ट भक्ते शेषतः क्रमात् ।
ध्वजधूमौ च सिंहः श्वा गोखरौ गजवायसौ ॥

तत्र ध्वजसिंहवृषगजाविषमा आयाः सर्वत्र शस्ताः । समास्तु धूमशुनकरासभध्वांक्षा अनिष्टकराः । कुण्डे तु ध्वजधूमौ शस्तौ । तयोरपि ध्वजायोऽतीवशस्त इत्याहुः । तदुक्तं विश्वकर्मणा—

स्थापने सर्वकुण्डानां ध्वजायः सर्वसिद्धिदः ।
ध्वजायहीनं यत्कुण्डं प्रोक्तं कर्तुरनिष्टकृत् ॥ इति ॥

आयतत्वेऽपि—

देवागारे तथा कुण्डे ध्वज आयः प्रशस्यते । इत्याहुः । ध्वजायालाभे धूमायेऽपि कार्य्यम् । तदुक्तं शारदायाम्—

ध्वजायरहितं कुण्डं सलक्षणमपि त्यजेत् ।
अन्ये धूमायमिच्छन्ति दैवज्ञाः कुण्डकर्मणि ॥ १ ॥
अग्निस्थानं होमकुण्डं शालापाकगृहाणि च ।
धूमे कुर्य्यात् प्रयत्नेन याज्ञिकानां गृहं तथा ॥ २ ॥ इति ॥

वस्तुतस्तु ध्वजायस्यात्र प्रशस्ततमत्वेऽपि कुण्डसिद्धौ नात्यन्तं तस्यापेक्षा । हस्तमात्रे क्षेत्रे चतुर्विंशतिवर्गस्याष्टभागाधिःशेषता प्राप्तौ वायसाय सत्वेऽपि ध्वजायासंभवात् । तस्यानादेयतापत्तेः । यत्तु कुण्डप्रदीपे ध्वजायसंपत्त्यर्थं तत्र-

यूकामात्रं सर्वभुजेष्वधिकं कार्य्यं यथात्र क्षेत्रफलेऽष्टभक्ते किञ्चिदङ्गुलात्मकमवशिष्टं स्यादित्युक्तम् । यथा वा—

ध्वजाग्रप्राप्तये तिर्य्यगूर्ध्वमेकाङ्गुलीयकम् ।
निखनेत् सर्वकुण्डानां ध्वजाग्रः कीर्तितो बुधैः ॥

इति शारदायाम् ॥

यावान् कुण्डस्य विस्तारस्तावानायाम ईरितः ।
तिर्य्यगूर्ध्वध्वजाग्रार्थं खन्यमेकाङ्गुलाधिकम् ॥

इति कुण्डमण्डपे व्याख्यातम् ॥ तत्प्रमाणाभावादनादेयम् । चतुर्विंशत्यङ्गुलात्मकभुजमानस्यैव शास्त्रसंमतत्वादल्पेनाप्याधिक्ये यज्ञशास्त्रविरोधापत्तेः । "नोपदध्यान्नेदतिरेचयानीति । एतावद्वा एतदेवा अकुर्वन्" इति श्रुत्या यज्ञेऽतिरिक्तकरणस्य विप्रतिषिद्धत्वात् । अपि च मृद्दिष्टकादिमयकुण्डनिर्म्माणप्रसङ्गे यव यूका लिक्षादिमानेन न्यूनाधिकताया देवैरपि दुर्विज्ञेयत्वं मन्यामहे । अतएवेदृशी सूक्ष्मेक्षिका तथा तत्कृतदुष्करव्यापारेण कर्म्मणो जटिलीकरणं च पुरोडाशाश्वशुरत्वन्यायेन श्रुत्या प्रतिषिध्यते । तथा हि पुरोडाशं प्रकृत्य—"अश्वशफमात्रं कुर्य्यादित्युहैक आहुः । कस्तद्वेद यावानश्वशफः । यावन्तमेव स्वयं मनसा न सन्ना पृथुं मन्येत, एवं कुर्य्याद्"—इति श्रूयते ॥ एवमिहापि कस्तद्वेद यदिह यूकालिक्षादिभिरन्यूनमनतिरिक्तं चास्तीति । तस्मादिह यूकालिक्षादिभिर्न्यूनाधिकताभिमानो मिथ्याव्यामोहमात्रमतस्तदुपेक्ष्यते ॥ तथा च ध्वजायालाभेऽपि यथोक्तप्रमाणेन साधितानि कुण्डानि सिध्यन्तीति दिक् ॥

अपि चाथर्वणवेदानुसारेण तिस्रो विद्या इष्यन्ते—दैवविद्या, अथर्वविद्या, लोकविद्या चेति । एषा हि प्रकृतिर्भगवती यथाययमिदं जगच्चक्रवालमनवरतं यया नियत्या निर्वाहयति—उत्तरोत्तरा पुनः संहारयति तद्विज्ञानं दैवीविद्या । यथा सूर्य्यचन्द्रपृथिव्यादिसृष्टिः सुवर्णरजतादिसृष्टिः मेघवृष्टिरित्यादयोऽर्था दैव्या नियत्या संपद्यन्ते । अथ मनुष्याणां स्वप्रतिकूलप्रकृतिप्रवाहस्य प्रकृत्यन्तरप्रवाहयोजनया निरसनं तथा स्वानुकूलप्रकृतिप्रवाहस्य स्वाभिमुखीकरणं चेत्येवमादयोऽर्था यया नियत्या कर्तुं शक्यते तादृशनियतिविज्ञानमाथर्वणीविद्या । यथाऽवरोधे

मेघवृष्टिकरणं, बन्ध्यायाः पुत्रोत्पादनं, गृहच्छत्रादिनिर्माणं चाथर्वण्या संपाद्यते। अथ तत्तद्देशविशेषे तत्तल्लोकैः स्वदेशमात्रानुकूलव्यवहारसिध्यर्थं बहवोऽर्थाः प्रकल्प्य प्रकल्प्य व्यवहारे नियोज्यन्ते। यथा कुडवप्रस्थाढकद्रोणादिमानानि, यथा यूकायवाङ्गुलहस्तादिमानानि, यथा वराटिकाताम्रपणपुराणिका-कर्षापणसुवर्णमुद्रादिमानानि: तेषां तत्तत्कल्पनामूलकं तत्तन्नियतिविज्ञानं लोकविद्यानाम। तासामासां विद्यानामयमर्थो दैवविद्यार्थोऽथर्वणविद्यार्थो वा स्यात्। अङ्गुलहस्तादिमानप्रकल्पनं तु लोकविद्यार्थः। स च लोकप्रतिपत्तिभेदेन तत्तद्देशे प्रभिद्यते। यथा देशेऽङ्गुलहस्तादिमानेन व्यवहाराः प्रवर्त्यन्ते। देशान्तरे पुनरिञ्चफुटादिमानेन व्यवहाराः प्रवृत्ता दृश्यन्ते। तत्र हस्तमानेन हस्तमात्रे कुण्डे ध्वज आयः संपद्यते। अङ्गुलमानेन वायसायः। इञ्चफुटमानेन तु तत्र चतुर्थः शुनकायः स्यादित्यव्यवस्थायाम प्रतिपत्तिर्भवति। न च तत्तद्देशे स्वेच्छा-प्रकल्पितमानक्रमानुरोधेन तत्र तत्रायफलोत्पत्तौ वैषम्योत्पादनं विज्ञानानुमोदितं संभाव्यते। लोकविद्यार्थानां दैवविद्यार्थैः सह संप्रयोगस्यानवक्लृप्तेः। तस्मादवि-ज्ञानमेतत्। अतएव ध्वजायालाभेऽपि यथोक्तप्रमाणेन—

साधितानि कुण्डानि सिद्ध्यन्त्येवेति सिद्धम् ॥
इत्यायप्रतिपत्तिसाधनम् ॥

## अथ क्षेत्रसाधनम् ॥ १ ॥

कुण्डानामाकारप्रकारः क्षेत्रम्। कुण्डः स्वविग्रहेण यावन्तं प्रदेशमाक्रामति तत् क्षेत्रम्। तत्र सर्वाधिकार साधारणं सर्वकामप्रदं सर्वविधकुण्डानां प्रकृतिभूतं चतुरस्रं कुण्डमादौ व्याख्यास्यामः। कुण्डस्य यावान् विस्तारो विवक्षितस्ततो द्विगुणां रज्जुमुभयतः पाशां कृत्वा, तत्र विस्तारार्धे शंकुनिमित्तं विस्तारार्धार्धे तु कर्षणनिमित्तं चिह्नं कृत्वा, तां रज्जुं प्राच्यन्त शंकुद्वये प्रोतां कुर्यात्॥ ततः कर्ष-णचिह्नं दक्षिणाकृष्य शंकुनिमित्ते शंकुं निखन्यात् सा दक्षिणा श्रोणिः। एकमुत्त-रतः। अथ पाशौ विपर्य्यस्य तथा करणे दक्षिणोत्तरावंसौ भवतः। तेन चतुरस्रं संपद्यते।

केचित्तु चतुरस्रसाधने प्रकारान्तरमाहुः। दिक्साधनविधया पूर्वापररेखां दक्षिणोत्तररेखां च निष्पादयेत्। तादृशरेखाग्रान्तचतुष्टयस्य प्रत्येकं पार्श्वद्वये

चिकीर्षितपरिमाणस्यार्द्धमर्द्धं निधाय तत्सन्धौ कोणचिह्नानि कुर्य्यात् । ततः कोणचिह्नेषु सूत्रचतुष्टयनिपातनाच्चतुरस्रं संपद्यते इति ॥ यथाकथंचिद्वा चतुर्विंशत्यङ्गुलैश्चतुर्भिर्भुजैः समकर्णं चतुरस्रं निष्पादयेत् । न्यासो यथा—



## अथ योनिकुण्डम् ॥ २ ॥

वेद्या आग्नेयदिशि योनिकुण्डं संपादयेत् । चतुरस्रक्षेत्रव्यासस्य द्वानवतं शतमंशानां कृत्वा तादृशा ऊनविंशतिर्भागा उत्तरश्रोण्यामूनविंशतिरेव दक्षिणश्रोण्यां पुरस्तात् कोणाश्रिता वर्द्धनीयाः । ते चोनविंशतिर्भागा यवत्रयोपेतेनाङ्गुलिद्वयेन तुल्या भवन्ति । तथा हि हस्तमात्रे कुण्डे चतुर्विंशत्यङ्गुलः क्षेत्रव्यासो भवति । अङ्गुलं त्वष्टयवात्मकम् । तेन द्वानवतं शतमेव यवास्तत्र क्षेत्रव्यासो निष्पद्यते । तेषु चोनविंशत्या यवैः श्रोण्या अभिवृद्धिः कार्य्या । श्रोण्या रज्जुपर्यन्तं सूत्रद्वये स्थिते त्रिकोणं भवति । मध्याद्वर्द्धितश्रोण्यग्रपर्य्यन्तं विततस्य सूत्रस्यार्द्धं कृत्वा तदाधारेण बहिर्वृत्तार्द्धं भ्रामयेत् दक्षिणतश्चोत्तरतश्च । तथा च योनिकुण्डं

संपद्यते ॥ तच्चेदं हस्तमात्रं योनिकुण्डं स्यात् । द्विहस्तादिकुण्डेषु त्वङ्गुलस्य पारिभाषिकतया यवा अपि पारिभाषिका एव ग्राह्याः । द्वानवतशतात्मकस्य क्षेत्रव्यासभागस्यैवेह यवत्वेनेष्यमाणत्वादित्यूह्यम् ॥

अथवा चतुरस्रक्षेत्रे नैर्ऋत्यकोणसूत्रस्य वायव्यकोणसूत्रस्य च क्षेत्रमध्यात् कोणपर्य्यन्तमष्टौ भागाः कार्य्याः । तत्र क्षेत्रमध्यारब्धपञ्चमभागान्ते सूत्रं दत्वा तादृशपञ्चभागपरिमितसूत्रत्रिज्यया बहिर्वृत्तार्थं नैर्ऋत्यकोणे वायुकोणे च संपादयेत् । तेन योनिकुण्डं संपद्यते ।

केचित्तु प्रकारान्तरमाहुः । समचतुरस्रक्षेत्रस्य पश्चिमरेखामध्यात् पूर्वरेखामध्यभेदिनीं क्षेत्रसूत्र पंचमांशेन० । ३८ । ३ । यूकात्रयोपेतषड्यवाधिकचतुरङ्गुलात्मकेनाधिकां गर्भरेखामालिख्य नैर्ऋत्यदेशे कोणसूत्रस्थतुरीयांशे चिह्नं कृत्वा तच्चिह्नोपरि विन्यस्तादेः सूत्रस्य पूर्वोक्तगर्भरेखामूला वन्यस्तं प्रान्तं परिभ्रम्य बहिर्वृत्तार्द्धं निष्पादयेत् । एवं वायव्यकोणेऽपि बहिर्वृत्तार्द्धं रचयेत् । ततो गर्भरेखाप्रान्ताद् वृत्तद्वयप्रान्तस्पर्शिसूत्रद्वयं निपात्य पिप्पलपत्राकारं योनिकुण्डं विदध्यादिति ॥

परे त्वाहुः । यथाकथंचिद्वा सार्द्धद्वियवाधिकैस्त्रिंशदङ्गुलैस्त्रिभिर्भुजैस्त्रिकोणं प्रागग्रं कुर्य्यात् । तत्र पश्चिमदिशि यो भुजस्तस्यार्द्धे कृते जातयोर्दलयोः पश्चादर्द्धचन्द्राकारौ द्वौ नितम्बौ तद्दलार्द्धत्रिज्यया कर्कटकेन संपाद्यौ ॥ तत इत्थं साधिते क्षेत्रे खातं नाभिं कण्ठं तिस्रो मेखलाश्च प्राग्वद्रचयेत् । योनिं तु योनिकुण्डेन कुर्य्यादिति बहवः ॥

न्यासस्तद्यथा—



## अथार्द्धचंद्रकुण्डः ॥ ३ ॥

वेद्या दक्षिणदिश्यर्द्धचन्द्रं संपादयेत् । चतुरस्रक्षेत्रव्यासस्य चतुर्विंशत्यंशान् कृत्वा सार्द्धभागद्वयमग्रतः सन्त्यज्य षोडशांशहीनं सार्द्धभागद्वयं चोपरिष्टात् संत्यज्योभयत्र चिह्नं तत्र तत्र कृत्वोपरि चिह्ने तिर्यग्दक्षिणोत्तरज्यासूत्रं दत्वा चिह्नद्वयान्तरसूत्र त्रिज्ययोपरि चिन्हस्य सूत्रेण वृत्तार्द्धं भ्रामयेत् । ततोऽर्द्धचन्द्रं कुण्डं भवति ॥

प्रकारान्तरं यथा--चतुरस्रक्षेत्रं नवधा विभज्य तत्राद्यन्तौ भागौ त्यक्त्वा अवशिष्टसप्तभागादिमरेखा गर्भदेशे सूत्रादिं निधाय तस्यैव भागसप्तकस्यान्तिमरेखा गर्भदेशे सूत्रान्तं निवेश्य तत्सूत्रपरिभ्रमणेन प्रथमरेखातुल्यविश्रान्तप्रान्तं वृत्तार्द्धं रचयेत् । अथ प्रथमरेखाप्रान्तद्वयमपि वृत्तार्द्धे संयोज्य चन्द्रार्द्धं संपादयेत् ॥ परेत्वाहुः ॥ यथाकथंचिद्वा सपादयवयुक्तैकोनविंशत्यङ्गुल (१६ । १ । २) व्यासार्द्धमानेन वृत्तं कृत्वा तदर्द्धं कुर्यात् । तदर्द्धचन्द्रं संपद्यते ॥ इत्थं साधिते क्षेत्रे खातादीनि पञ्चाङ्गानि यथायथं रचेत् ॥ तत्र दक्षिणमेखलासूत्तराभिमुखीं योनिं विन्यसेत् ॥ न्यासो यथा--



## अथ त्रिकोणकुण्डः ॥ ४ ॥

वेद्या नैर्ऋत्यभागे त्रिकोणकुण्डं सम्पादयेत् । समचतुरस्रक्षेत्रव्यासचतुर्विंशांशप्रमितान् पञ्चभागान् श्रोणयोः पृथक् परिवर्ध्य दशभागानष्टमांशविकलान् पुरस्तात् संवर्ध्य तेषु पातितैस्त्रिभिः सूत्रैस्त्रिकोणकुण्डः संपद्यते ॥

परे त्वाहुः--समचतुरस्रक्षेत्रस्य पश्चिमरेखामध्यात् पूर्वस्थितरेखामध्यमे दिनीं क्षेत्रसूत्रतृतीयभागाधिकां गर्भरेखामालिख्य पश्चिमरेखाप्रांतद्वयमपि क्षेत्र

सूत्रतृतीयभागाधिकं कुर्यात् । ततो गर्भरेखाप्रान्तात् पश्चिमरेखाप्रान्तद्वयस्पर्शिसूत्रद्वयं निपात्य त्रिकोणं संपादयेत् ॥

परे त्वाहुः—यथाकथंचिद्वा सार्द्धषट्त्रिंशदङ्गुलै ( ३६ । ४ ) स्त्रिभिर्भुजैस्त्रिकोणं संपादयेदिति ॥ इत्थं साधिते क्षेत्रे खातादीनि पञ्चाङ्गानि यथायथं रचयेत् ॥ तत्र पश्चिममेखलासु पूर्वाभिमुखीं योनिं विन्यसेत् ॥ तद्यथा—



## अथ वर्तुलकुण्डः ।

वेद्याः पश्चिमदिशि वृत्तं संपादयेत् । समचतुरस्रक्षेत्रव्यासषोडशांशत्रमितं भागमेकं पुरतः संवर्ध्य मध्यात्तारेण वर्धितचिह्नत्रिज्यया मण्डलं कुर्यात् । तेन वृत्तकुण्डः संपद्यते ॥

अन्ये त्वाहुः—चतुरस्रक्षेत्रे कोणात् कोणान्तरगामिनः सूत्रस्यार्द्धं कोणार्द्धशब्देनोच्यते । कोणार्द्धस्याष्टधा विभक्तस्य यावानष्टमो भागस्तावन्तं भागं चतुर्दिक्षु बहिर्विन्यसेत् । ततः क्षेत्रगर्भदेशे सूत्रादिं निधाय बहिः स्थिताष्टमभागं विन्यस्तं तस्यैव सूत्रस्य प्रान्तं सर्वतः परिभ्रम्य वृत्तकुण्डं संपादयेत् ॥

परे त्वाहुः—यथाकथंचिद्वा सपादचतुर्यवयुक्तत्रयोदशाङ्गुलव्यासार्द्धमानेन ( १३ । ४ । २ ) वृत्तं कार्य्यम् । तद्वृत्तकुण्डं स्यादिति ॥ इत्थं साधिते क्षेत्रे खातादीनि पञ्चाङ्गानि यथायथं रचयेत् । तत्र पश्चिममेखलासु पूर्वाभिमुखीं योनिं विन्यसेत् ॥ तद्यथा—

## अथ षट्कोणकुण्डः । ६

वेद्या वायव्यभागे षट्कोणं संपादयेत् । चतुरस्रक्षेत्रे गर्भसूत्रस्य द्वानवतं शतमंशानां कृत्वा तथाविधैः पञ्चविंशत्यंशैरुभयतो वर्द्धितस्य दक्षिणोत्तरसूत्रस्य पूर्वस्य यौ प्रान्तबिन्दू स्तयोरधस्तात् सप्तविंशेऽशे मत्स्यतश्चिह्नयेत् ।

पाश्चात्यस्य तु तस्य यौ प्रान्तबिन्दू तयोरूर्ध्वं सप्तविंशोऽशे मत्स्यतश्चिह्नयेत् ।अथ पूर्वतः पश्चिमतश्चोनत्रिंशदंशवृद्धौ दक्षिणोत्तरपूर्वभागस्थान्मत्स्यद्वयादारभ्य पुरो वर्द्धितचिह्नं यावत् सूत्रं दद्यात् । तथा दक्षिणोत्तरपश्चिमभागस्थान्मत्स्यद्वयादप्यारभ्य पश्चाद्वर्धितचिह्नं यावत् सूत्रं दद्यात् । मत्स्ययोः पार्श्वद्वयेऽपि सूत्रदानात् षट्कोणं संपद्यते ॥

प्रकारान्तरमप्याहुर्यथा । समचतुरस्रक्षेत्रं स्वषष्ठांशमानेनोत्तरतो दक्षिणतश्च वर्द्धयित्वा तदायतचतुरस्रं संपादयेत् । तस्मिंश्च दक्षिणोत्तरायतां गर्भरेखां रचयेत् । गर्भरेखाया मध्यबिन्दोस्तदुत्तरप्रान्तबिन्दोश्च समभुजात्रिकोणं पूर्वैशान्यन्तराले पश्चिमवायव्यान्तराले च मत्स्यमुत्पाद्य संपादयेत् । एवमेव गर्भरेखामध्यात् तद्दक्षिणप्रान्ताच्च समत्रिकोणं पूर्वाग्नेयान्तराले पश्चिमनैर्ऋत्यान्तराले च मत्स्येन संपादयेत् । तदित्थं चत्वारो मत्स्या द्वौ च गर्भरेखा प्रान्ताविल्येतेषु षट्सु कोणबिन्दुषु षण्णां योगसूत्राणां निपातनात् षट्कोणं संपद्यते ॥

परेत्वाहुः—यथा कथंचिद्वा सार्द्धचतुर्यवयुक्तैकविंशदङ्गुलै स्त्रिभिर्भुजै ( २१ । ४ । ४ ) स्त्रिकोणमेकं प्राङ्मुखं संपाद्य तावता मानेनैवापरं प्रत्यङ्मुखं त्रिकोणं संपादयेत् । तयोश्च प्राङ्मुखप्रत्यङ्मुखयोर्द्वयो स्त्रिकोणयोरूर्ध्वाधोभागेन विन्यस्तयोरन्योन्येन तृतीये भागे परियोजनात् षट्कोणं संपद्यते । ततो बाह्यकोणषट्कपर्य्यन्तं खात्वा कुण्डं संपादयेदिति ॥

इत्थं साधिते क्षेत्रे खातादीनि पञ्चाङ्गानि यथायथं रचयेत् । तत्र पश्चिममेखलासु पूर्वाभिमुखीं योनिं विन्यसेत् ॥ तद्यथा—






## अथ पद्मकुण्डः । ७

वेद्या उत्तरतः पद्मकुण्डं संपादयेत् । चतुरस्रक्षेत्रं पूर्वापरतो दक्षिणोत्तरतश्चाष्टधा विभज्य क्षेत्राद्बहिरप्यष्टमभागेन चतुर्दिक्षु वर्द्धयेत् । ततः क्षेत्रमध्यादष्टमांशत्रिज्यया कृतं प्रथमं वृत्तं कर्णिका स्यात् । पुनर्द्वितीयेनाष्टमांशेन वर्द्धितया त्रिज्यया कृतं द्वितीयं वृत्तं केसराणि स्युः । पुनस्तृतीयेनाष्टमांशेन वर्द्धितया त्रिज्यया कृतं चतुर्थं वृत्तं दलकोटयः स्युः । दलानामुपरितनीभूमिर्दलकोटिः । मध्यतश्चतुर्थेऽष्टमांशे चतुरस्रक्षेत्रं परिसमाप्यते । ततः क्षेत्राद्बहिः परिवर्द्धितेन पञ्चमेनाष्टमांशेन वर्द्धितया त्रिज्यया कृतं पञ्चमं वृत्तं दलाग्राभूमिः स्यात् । पञ्चस्वेतेषु वृत्तेषु सर्वत्र वृत्तद्वयपाल्योरन्तरं त्र्यङ्गुलं द्रष्टव्यम् । हस्तमात्रे क्षेत्रे क्षेत्राष्टमांशस्य त्र्यङ्गुलात्मकत्वात् । केचित्तु पञ्चभिः षोडशांशैर्हीनस्याऽष्टमांशस्य क्षेत्राद्बहिः समन्ताद्वृद्धिमिच्छन्तः सार्द्धसतयवैर्हीनं त्र्यङ्गुलं चतुर्थपञ्चमवृत्तयोरन्तरमाहुः । तथा च तन्मते दलकोटिदलाग्रवृत्तयोरन्तरं चतुर्यूकाधिकद्व्यङ्गुलं द्रष्टव्यम् ( २ । ० । ४ ) इयतैवान्तरेण चतुरस्रक्षेत्रतोऽपि बहिर्दलाग्राणि स्पर्शयेत् । अथ कर्णिकां स्वविस्तारतुल्योच्चां विहाय खनेत् । तदिदमष्टदलं चतुर्दलं वा पद्मं संपद्यते ॥

प्रकारान्तरेणापि तन्निर्माणमुच्यते । प्रतीच्यामित्यत्र वृत्तकुण्डं विधाय तद्वृत्तान्मेखलाभ्यन्तरस्थादन्तरतः समभागं वृत्तत्रयं कुर्यात् । तेन मेखलाभ्यन्तरे वृत्तकुण्डं चतुर्धा विभक्तं संपद्यते । तत्र क्षेत्रमध्ये सार्धभागेन विस्तृता सार्धभागेनैव नोच्छ्रिता कर्णिका स्यात् । अवशिष्टेन सार्द्धभागद्वयेन केसरव्यतिरिक्तानि दलान्येव कुर्य्यात् । तेन चतुर्दलमष्टदलं वा पद्मकुण्डं संपद्यते॥ अथवा वृत्तकुण्डं विधाय तन्मध्ये यथाविभागं दलानि कृत्वा पद्मकुण्डं कुर्य्यादित्याहुः ॥ परे त्वाहुः—यथाकथंचिद्व्यासार्द्धद्वादशाङ्गुलव्यासार्द्धेन ( १२ । ४ ) पूर्वमेकं वृत्तं कृत्वा सपादयवयुक्तपञ्चदशाङ्गुलैः पुनरपरं वृत्तं कुर्य्यात् । ( १५ । १ । २ ) ततः केन्द्रात् कर्कटकं प्रसार्य्य बाह्यवृत्तेऽभ्यन्तरवृत्ते चाष्टौ दिक्चिह्नानि कृत्वा मध्यवृत्ताद्दिगन्तपर्यन्तं दिक्चिह्नानां मध्यतोऽष्टौ त्र्यस्राणि कार्य्याणि । तेनाष्टदलं पद्मकुण्डं संपद्यते ॥

तत्र खातादीनि पञ्चाङ्गानि यथायथं रचयेत् । पश्चिममेखलासु पूर्वाभिमुखीं योनिं विन्यसेत् । तद्यथा—





## अथाष्टकोणकुण्डः । ८

वेद्या ऐशानी भागेऽष्टास्त्रकुण्डं संपादयेत् । चतुरस्रक्षेत्रस्य पूर्वापरं गर्भसूत्रं पुरस्तात् पश्चाच्च तथा वर्द्धयेत् येनेदं गर्भसूत्रं कर्णसंमितं स्यात् । कोणात् कोणान्तरस्पर्शिसूत्रं शिल्पशास्त्रे कर्णशब्देन व्यपदिश्यते । दक्षिणोत्तरं च गर्भसूत्रं कर्णतुल्यत्वाय दक्षिणोत्तरयोर्वर्द्धयेत् । ततस्तेषु वर्द्धितगर्भरेखाप्रान्तेषु चतुर्षु चतुरस्रक्षेत्रकोणेषु च चतुर्षु योगसूत्रदानादष्टाश्रिकुण्डं संपद्यते । इति ब्रूमः ॥१॥

प्रकारान्तरं यथा—चतुरस्रक्षेत्रस्य पूर्वापरं दक्षिणोत्तरं च गर्भसूत्रं त्रयोदशभागैः स्वीयद्वात्रिंशांशसहितैश्चतुर्दिक्षु वर्द्धयेत् । वर्द्धितयोः प्रान्तयोः सूत्रदानेनान्यच्चतुरस्रं बाह्यं क्रियते । ततो गर्भसूत्रं कोणसूत्रं चान्तरान्तरा पुनरन्यारेखा अष्टौ कार्य्याः । तासामन्तररेखाणां बाह्यचतुरस्रे यत्र यत्र योगस्तत्र तत्र चिह्नं कृत्वा तेषु योगचिह्नेषु सूत्रं निपातयेत् । ततोऽष्टभुजक्षेत्रं संपद्यते ॥ २ ॥

तृतीयं प्रकारमप्याहुः—चतुरस्रक्षेत्रं बहिश्चतुर्दिक्षु द्वादशभागेन वर्द्धयित्वा तत्परिमाणेनापरं बाह्यं चतुरस्रं कुर्य्यात् । तस्य बाह्यस्थितचतुरस्रस्य गर्भदेशावधिर्यावान् कर्णस्तावता मानेन संमितस्य सूत्रस्यादिबाह्यचतुरस्रसंबन्धिनि कोणे निधाय तत्सूत्रं तत्कर्णोभयपार्श्ववर्तिनोर्बाह्यचतुरस्रभुजयोः प्रसार्य्य सूत्रप्रान्ते चिह्नयेत् । एवं प्रतिकोणं सूत्रादिं निधाय प्रातिलोम्यानुलोम्येन सूत्रस्य बाह्यचतुरस्ररेखोपरि प्रसारणात् सूत्रप्रान्तेषु चिह्नकरणात् प्रतिदिशं चिह्नद्वयसंपत्त्या दिक्चतुष्टये चिह्नाष्टकं निष्पद्यते ॥ तच्चिह्नोपरि सूत्राष्टकनिपादनादष्टाश्रिकुण्डं संपादयेत् ।

परे त्वाहुः—यथाकथंचिद्वा द्वाविंशत्यङ्गुलभुजैश्चतुरस्रे कृते चतुर्दिक्षु चतुरङ्गुलैर्वृद्धिः कार्या ॥ तत् प्रान्तात् पार्श्वयोः पादोनषडङ्गुलेषु तिर्य्यग् रेखाद्वयं विरचयेत् । ततोऽष्टास्त्रकुण्डं संपद्यते । तत्र खातादीनि पञ्चाङ्गानि यथायथं रचयेत् । पश्चिममेखलासु पूर्वाभिमुखीं योनिं विन्यसेत् । तद्यथा—









इत्थमष्टौ कुण्डानि वेद्या अष्टासु दिक्षु क्रमेण विहितानि । तेषां पूर्वमाग्नेयं दक्षिणं चेति त्रीणि कुण्डान्युत्तराग्राणि दक्षिणतो योनीनि कुर्य्यात् । इतराणि तु नैर्ऋत्यादीनि पञ्चकुण्डानि पूर्वाग्राणि पश्चिमतो योनीनि स्युः । नवकुण्डीकरणे तु नवमं पूर्वैशानमध्यस्थं पूर्ववच्चतुरस्रमुत्तराग्रं दक्षिणतो योनिकुर्य्यादित्येके । पूर्वाग्रं पश्चिमतो योनि स्यादिति परे ॥ पञ्चकुण्ड्यामप्येवं पूर्वैशानमध्यस्थं कुर्य्यादिति कुण्डप्रदीपादयः । ऐशान्यां दक्षिणयोनिकं कुर्य्यादित्याम्नायरहस्यादयः ॥

"नवमं कारयेत् कुण्डं पूर्वेशानदिगन्तरे ।
विधाने पञ्चकुण्डानामीशाने पञ्चमं भवेत् ॥" इत्युक्तेः।

## अथ पञ्चास्रकुण्डः ।

ग्रहनिग्रहादिहोमे विज्ञानललितोपदिष्टं पञ्चास्रकुण्डं विदध्यात् । द्वादशभागवति क्षेत्रव्यासार्धे त्रीन् भागान् स्वविंशांशसहितान् संवर्ध्य तेन व्यासार्द्धेन वृत्तं कुर्य्यात् । स्वपञ्चमांशद्वयं शून्येन चतुरस्रव्यासेन संमिताः पञ्चज्यास्तत्र कुर्य्यात् । ज्याषष्ठांशमितैः पञ्चशरैर्युक्ताः पंचचापा यथा स्युस्तथा कृत्वा तांश्चापान् परिमार्जयेत् । तथा च पंचाश्रिकुण्डं संपद्यते ॥ १ ॥ अथवा चतुरस्रक्षेत्रस्य बहिः प्रदेशे चतुर्दिक्षु क्षेत्रसप्तमांशं विन्यसेत् । ततः क्षेत्रगर्भविन्यस्तादेर्बाह्यस्थित सप्तमांशोपरि विन्यस्तप्रान्तस्य सूत्रस्य सर्वतः परिभ्रमणाद्वृत्तं निष्पादयेत् । अथान्तर चतुरस्रस्य यद्दैर्घ्यं तत् स्वीयचतुर्थभागन्यूनं कृत्वा तावता मानेन परिमितानि पंचसूत्राणि बाह्यवृत्तस्यान्तर्विन्यस्य सूत्रसन्धौ कोणं कुर्य्यात् । तानि पंचसूत्राणि प्रत्येकं प्रान्तद्वयसंस्पृष्टवृत्तत्वाद् धनुर्ज्याकृतीनि स्युः । ततः पंचसूत्रातिरिक्तं सर्वं परिमृज्य पंचास्रकुण्डं संपादयेत् ॥ परेत्त्वाहुः यथाकथंचिद्वा पूर्वमेकादशाङ्गुलव्यासार्द्धेन ( ११ ) वृत्तं कार्य्यम् । ततः सार्द्धाष्टादशाङ्गुलैः ( १८।४ ) परं वृत्तं कार्य्यम् । ततः कृतपंचांशचिह्नादाभ्यन्तरवृत्ताद्बाह्यवृत्ते यथाश्रिकैकादशाङ्गुलभुजैः कृतानां त्रिकोणानां पंचानां विन्यासात् पंचास्रं कुण्डं संपद्यते ॥ खातादिपंचाङ्गानि पूर्ववत् ॥ न्यासो यथा—





## अथ सप्तास्रकुण्डः ।

अभिचारदोषोपशमनहोमेषु विज्ञानललितोपदिष्टं सप्तकोणकुण्डं प्रयोजयेत् चतुरस्रक्षेत्रव्यासार्द्धे षट्त्रिंशद्भागवति सप्तभागान् संवर्ध्य वर्धितेन व्यासार्धेन वृत्तं कुर्य्यात् । तद्व्यासविंशांशमितैः शरैर्युक्ता सप्तचापा यथा स्युस्तथा तत्र ज्याः साधयेत् । एषा हि ज्या नवगुणितशरमिता द्रष्टव्या । तथा च सप्ताश्रिकुण्डं संपद्यते ॥ १ ॥

अथवा-चतुरस्रक्षेत्रस्य दशमभागं चतुर्दिक्षु बहिर्विन्यस्य पूर्ववद्वृत्तं कुर्य्यात् । ततश्चतुरस्रक्षेत्रं चतुःषष्ठ्या विभज्य तादृशैस्त्रयस्त्रिंशद्भागैः परिमितानि सप्तसूत्राणि वृत्तस्यान्तर्विन्यस्य सप्तास्रकुण्डं संपादयेत् ॥ २ ॥

परे त्वाहुः—यथाकथंचिद्वा यवत्रययुक्तचतुर्दशाङ्गुलव्यासार्धमानेन ( १४ । ३ ) वृत्तं कुर्य्यात् । तत्र सपादद्वादशाङ्गुलैः ( १२ । २ ) सप्तभुजान् विरचयेत् तेन सप्तकोणकुण्डं संपद्यते ॥ तद्यथा-इत्थं चैते कुण्डनिर्म्माणे यावन्तः प्रकारा आख्यातास्ततोऽप्यन्यथा बहुशः संभाव्यन्ते अन्येऽपि प्रकारा ग्रन्थान्तरेषूपलभ्यन्ते किन्तु फले विशेषाभावाज्जटिलप्रक्रिया उपेक्ष्यन्ते ॥







## अथ खातः ।

उक्तानि दशधा कुण्डक्षेत्राणि । अतः परमेषां पंचाङ्गानि खात, नाभि, कण्ठ, मेखला, योनिरूपाणि यथाक्रमं प्रदर्श्यन्ते ।

खननं खातः । कुण्डगर्तः । समचतुरस्रे कुण्डे चतुरस्रो वृत्ते वृत्त इत्येवं कुण्डानुरूपं कार्य्यः । अपि च विस्तारतुल्यः खातो विधीयते । कुण्डस्य तिर्य्यङ्-मानं विस्तार उच्यते । तथा च हस्तमात्रे कुण्डे हस्तमात्रं पूर्वापरयोर्दक्षिणोत्त-रयोश्च तिर्य्यङ् मानं भवतीत्यूर्ध्वाधरमानमपि कुण्डस्य हस्तमात्रमेव कुर्य्यादित्याहुः । तत्र खातविषये मतद्वयं भवति—प्रथमया मेखलया सहितस्य कुण्डस्योर्ध्वाध-रमानं ग्राह्यमिति कृत्वा मेखलाया नवाङ्गुलोच्चतया तद्व्यतिरेकेण पञ्चदशाङ्गुलान्य-धस्तादु भूमिं खनेत् । तथा च विस्तारतुल्यं चतुर्विंशत्यङ्गुलमेव कुण्डस्योर्ध्वा-धरमानं संपद्यते । उक्तं च—

"कुण्डं जिनाङ्गुलं तिर्य्यगूर्ध्वं मेखलया सह ।
पञ्चत्रिमेखलोच्छ्रायं ज्ञात्वा शेषमधः खनेत् ॥"

व्यासात् खातः करः प्रोक्तो निम्नास्तिथ्यङ्गुलेन तु । इति । द्विमेखलापक्षे त्वाद्या सप्ताङ्गुलेत्यतः सप्तदशाङ्गुलः खातः । एकमेखलापक्षे पंचमेखलापक्षे चाद्या षडङ्गुले त्यतस्तत्र खातोऽष्टादशाङ्गुलः कार्य्यः । तदित्थं मेखलोत्सेधान्तर्भा-वेनकुण्डोत्सेधो ग्राह्य इत्येकं विश्वकर्मसिद्धान्तशेखरादिमतम् ॥ १ ॥

अथवा मेखलानन्तर्भावेन कुण्डविस्तारतुल्यः खातः स्यात् । तथा च हस्तमात्रे कुण्डे पूर्वापरयोर्दक्षिणोत्तरयोश्च साम्येन चतुर्विंशत्यङ्गुलां भूमिं परिमा-प्याधस्तादपिचतुर्विंशत्यङ्गुलामेव भूमिं खनेत् । न तु पञ्चदशाङ्गुलमात्रम् मेखलायाः कुण्डाङ्गत्वेऽपि क्षेत्रबहिर्भूतत्वात्तदुत्सेधस्य कुण्डोत्सेधप्रवेशानौचि-त्यात् ॥ इति द्वितीयं वायवीय संहिता गणेशविमर्शिनी प्रयोगसारादि मतम् ॥२॥ अनयोश्च कामचारो वैकल्पिकत्वदित्याह शारदायाम् । पक्षद्वयमिति ज्ञात्वा यथारुचिसमाचरेदिति ॥ वस्तुतस्तु द्वितीयः पक्षो ग्राह्यो बहुसंमतत्वाद्युक्तियुक्त-त्वाच्च । कुण्डस्य रूपं जानीयात् परमं प्रकृतेर्वपुरित्यादिनाभिहिते प्रकृतिशरी-रात्मके कुण्डे मेखलानां भूषणरूपत्वेन विवक्षितत्वादनङ्गत्वात् तत्प्रवेशेन शरी-रसंस्था निर्देशानौचित्यात् । अपि च खातोऽयं दृष्टद्वारा संनिपत्योपकारकं

कुण्डस्याङ्गम् मेखलात्वदृष्टद्वारा भवत्यारादुपकारकं कुण्डस्याङ्गम्। मेखला-भिर्विनाकृतस्य कुण्डस्य स्वरूपतः सिद्धावप्यनिष्टफलजनकत्वं स्मर्य्यते। मरणं छिन्नमेखलमिति। खातेन विना कृतस्य तु कुण्डस्य स्वरूपमेव न सिद्धं भवतीतिस्वरूपोत्पादके खाते स्वरूपानुत्पादकमेखलान्तर्भावो नावकल्पते। उक्तं च योगिनीहृदये—

"खातं कुण्डायतेस्तुल्यमङ्गत्वं तस्य कीर्तितम्।
संनिपत्योपकारेण मेखला वेदिरिष्यते॥" इत्यादि।

अपि चेयं मेखला क्वचिदेका क्रियते, सा चतुरङ्गुलोच्छ्रिता भवति। क्वचित्पंच क्रियते, तत्र प्रथमा नवाङ्गुलोच्छ्रितेत्येव मनियतरूपाणां मेखलानां प्रवेशेन कुण्डस्वरूपनिर्म्माणमनुगतरूपं न स्यात्। अपि च—कुण्डव्यासतुल्यः खातः कार्य्य इत्युपदिश्यते। कुण्डव्यासस्तु कण्ठादधस्ताच्चतुर्विंशत्यङ्गुलः। कण्ठादुप-रिष्टात्तु षड्विंशत्यङ्गुल इति मेखलान्तर्भावेण कुण्डस्वरूपाभ्युपपत्तौ षड्विंशत्य-ङ्गुलः खातः प्राप्नोति। तच्चानिष्टम्। तस्माद् द्वितीयः पक्ष एव साधीयानिति कुण्डरत्नाकरादयः प्राहुः॥ मेखलानन्तर्भावेन कुण्डविस्तारतुल्यः खातः स्यात्। हस्तमात्रे कुण्डे खातोऽयमाख्यातः। द्विहस्तादिष्वप्येतावानेवखातः कार्य्यो न तु क्षेत्रवृद्धिवत् खातवृद्धिरिहेष्यते। कण्ठमेखलादिवत् खननस्याप्यङ्गतया तद्वृ-द्धेरविवक्षितत्वात्। चयनश्रुतौ सप्तविंशाद्येकशतविंशपर्य्यन्तं पुरुषवृद्धावपि तत्रेष्टकाचयनवृद्धेरकल्पनवत्॥ परंतु—

चतुर्विंशतिमं भागमङ्गुलं परिकल्पयतु।
चतुर्विंशाङ्गुलं हस्तं कुण्डानां परिकल्पयेत्॥ १॥
हस्तमात्रं खनेत्तिर्य्यगूर्ध्वं मेखलया सह॥

इति मोहचूडोत्तरशास्त्रादिषु खातादिमानार्थं पारिभाषिकमङ्गुलमानमिष्यते। तेन चिकीर्षितकुण्डक्षेत्रं चतुर्विंशतिधा विभज्य यावान् चतुर्विंशतितमोभाग-स्तावत्परिमाणमङ्गुलं परिकल्प्य तादृशाङ्गुलानां चतुर्विंशत्या हस्तं परिकल्पयेत्। तेन हस्तेन परिमितं सर्वकुण्डानां तिर्य्यक् खातमानं विधाय मेखलासहितस्य खातस्य तेनैव हस्तेन परिमितमूर्ध्वमानं विदध्यादित्याहुः॥





अथ कण्ठः ।

कण्ठ ओष्ठ इत्येकोऽर्थः । स च खातस्य वहिर्भागे खातमेखलयोरन्तराले चतुर्दिक्षु परितः समः कुण्डव्यास चतुर्विंशांशेन द्वादशांशेन कार्य्यः । तेन हस्तमात्रकुण्डे एकाङ्गुलो द्व्यङ्गुलो वा कण्ठो व्यवतिष्ठते । तत्र वहिरेकाङ्गुलः कण्ठो द्व्यङ्गुलः क्वचिदागमे इति सोमशंभुवचनाद्विकल्पः । केचित्तु पार्श्वद्वयस्थितैकाङ्गुलकण्ठद्वययोगाद् द्व्यङ्गुलत्वमुक्तमित्याहुः । वस्तुतस्तु-कण्ठस्य द्व्यङ्गुलत्वं कामिकादितान्त्रिकमतेनैकमेखलापक्षे नेयम् । तत्साहित्येनैवाक्तेः । यथोक्तं कामिके-

क्षेत्रार्कांशेन तस्योष्ठः स्यात्तद्वेदतु भागतः ।
मेखला पृथुतोच्छ्रायः कुण्डाकारा तु मेखला ॥
सर्वेषां तु प्रकर्तव्या मेखलैकात्र लाघवादिति ।

यत्र द्वादशांशेन कण्ठः क्रियते तत्रैका मेखला स्यात् । तस्याश्च विस्तारः कुण्डचतुर्थांशमाने षडङ्गुलः स्यात् मेखलोच्छ्रायस्तु कुण्डस्य षष्ठभागेन करणाच्चतुरङ्गुलः स्यात् । एकाङ्गुलकण्ठपक्षेऽपि क्वचिदेका मेखला षडङ्गुला क्रियते । तदुक्तं प्रथमे——

"कण्ठाङ्गुलाद्वहिः कार्य्या मेखलैका षडङ्गुला ।
चतुस्त्रिद्व्यङ्गुला यद्वा तिस्रः सर्वत्र शोभना ॥" इति ।

तथा चैकमेखलापक्षे कण्ठस्य क्वचिद् द्व्यङ्गुलत्वेऽप्यन्यत्र साधारण्येन सर्वत्रैकाङ्गुल एव कण्ठः कार्य्यः ॥

"खातादेकाङ्गुलं त्यक्त्वा मेखलानां त्रिधिर्भवेत् ।
एकाङ्गुलः स कण्ठः स्यान्मेखला खातमध्यगः ॥"

इत्युक्तेः । वृद्धौ तु द्विहस्ते द्व्यङ्गुलं, त्रिहस्ते त्र्यङ्गुलं, दशहस्ते दशाङ्गुलमित्येवं नेयम् ॥ कुण्डपञ्जाङ्गनिर्म्माणेऽङ्गुलमानस्य पारिभाषिकत्वात् ॥

## अथ नाभिः । ४

सा कुण्डगर्भे तत्तत्कुण्डाकारा क्रियते पद्माकारा वा । कुण्डव्यासस्य द्वादशांशेन तस्या उच्छ्रायः स्यात् षष्ठांशेन तु विस्तारायामौ स्याताम् । तेनैकहस्ते कुण्डे द्व्यङ्गुलोच्छ्रिता चतुरङ्गुलायामविस्तारा नाभिः संपद्यते । नाभेः पद्माकारत्वे तन्निर्म्माणप्रकारमाहुः । नाभिप्रमाणस्य द्वादशांशं बहिः संत्यज्यावशिष्टां भूमिं त्रिधा विभजेत् । मध्ये प्रथमैकांशेन कर्णिका, तद्बहिरेकांशेन केसराणि, तद्बहिरेकांशेनाष्टौ पत्राणि, तद्बहिरवशिष्टद्वादशांशेन दलाग्राणि स्युरिति ॥ योनिकुण्डे योनिवत् पद्मकुण्डे नाभिर्न कर्तव्येति बहवः प्राहुः ॥



## अथ मेखला ॥ ५

कण्ठतोऽपि बहिर्भागे समन्ततो वृत्तिरूपा मेखला क्रियते । तत्र मतचतुष्टयम् । एकैव स्यात्, द्वौ वा, तिस्रो वा, पञ्च वेति ।

उत्तमं त्विह निर्दिष्टं कुण्डं वै पञ्चमेखलम् ।
द्विमेखलं भवेन्मध्यं हीनं स्यादेकमेखलम् ॥ १ ॥
यद्वा मनीषिभिः प्रोक्तमुत्तमं स्यात्त्रिमेखलम् ।
द्विमेखलं भवेन्मध्यं हीनं स्यादेकमेखलम् ॥ २ ॥

इति विधानपारिजातोक्तेः ॥ तत्रैकापक्ष, द्विपक्ष पञ्चपक्षाः क्वाचित्काः । एकापक्षे तस्याः षडङ्गुलो विस्तारश्चतुरङ्गुलस्तूच्छ्रायो विधीयते । पिङ्गलादिमते तूच्छ्रायोऽपि षडङ्गुल एव ।

"एका षडङ्गुलोत्सेधविस्तारा मेखला मता" ।

इत्युक्तेः । कैश्चित् त्वेकस्या मेखलाया उच्छ्रायस्तद्विस्तारोऽपि चतुरङ्गुल एवेष्यते । कुण्डप्रदीपे तथोक्तेः । त्रिमेखलापक्षे तु ते द्वे मेखले पञ्चाङ्गुलाचतुरङ्गुले

कार्यं ॥ क्वचित्तु चतुरङ्गुलत्र्यङ्गुलरूपे द्वे मेखले विधीयेते "षष्ठांशेनाष्टमांशेन मेखला द्वितयं मतमिति तन्त्रान्तरोक्तेः । तत्कामनाविशेषे विहितमन्यसांप्रदायिकत्वादनादेयम् ॥

अथ बहुमतेन ता मेखलास्तिस्रः कार्याः । तासां कण्ठतो बहिः संलग्ना प्रथमा चतुरङ्गुलम्, प्रथमातो बहिः संलग्ना द्वितीया त्र्यङ्गुलम्, तृतीया द्व्यङ्गुलं विस्तृता स्यात् । अत्र चतुरङ्गुलादिकमुपलक्षणं कुण्डषष्ठांशादीनाम् ।

कुण्डषड्भागिका त्वाद्या द्वितीयाऽष्टांशिका स्मृता ।
तृतीया द्वादशांशा स्याद् इति कापिञ्जपञ्चरात्रोक्तेः ॥

अथवा पारिभाषिकमत्राङ्गुलं द्रष्टव्यम् । तेन द्विहस्त चतुर्हस्तादिष्वपि कुण्डानुरूपकल्पिताङ्गुलैश्चतुरङ्गुलत्र्यङ्गुलद्व्यङ्गुला एव तास्तिस्रो मेखला उपपद्यन्ते । उक्तं च शारदायाम्—

"कुण्डानां यश्चतुर्विंशो भागः सोऽङ्गुलसंज्ञकः ।
विभज्यानेन कर्तव्या मेखलाकण्ठनाभयः ॥ " इति ।

एवं प्रथमा नवाङ्गुलम्, तृतीया त्र्यङ्गुलमुच्छ्रिता स्यात् । यत्त्वाहुः—मेखलाया यावानेवोच्छ्रायस्तावानेव विस्तार इति । तत्समष्ट्यभिप्रायं नेयम् । समष्ट्यात्मना हि कण्ठाद्बहिर्नवाङ्गुलस्थलावगाहदर्शनात् । नवाङ्गुलोच्छ्रिताया मेखलाया नवाङ्गुल एव विस्तारः प्रतिपद्यते । चतुरङ्गुलत्र्यङ्गुलद्व्यङ्गुलानां मेखलानां योगेन सर्वसमष्ट्या मेखलाविस्तारस्य नवाङ्गुलत्वोपपत्तेः । तथा च कुण्डकण्ठतो मेखलाया यावदूर्ध्वमानं तावदेव तिर्यङ्मानमिति सिद्धम् ।



अथवा—कण्ठोपलक्षितपार्श्वे नवाङ्गुलोच्छ्रितायाः प्रथमाया मेखलायाश्चतुरङ्गुलविस्तृताया बाह्ये पार्श्वे संलग्ना पञ्चाङ्गुलोच्छ्रिता त्र्यङ्गुलविस्तृता द्वितीया मेखला कार्य्या। तस्या बाह्ये पार्श्वे संलग्ना द्व्यङ्गुलोच्छ्रिता द्व्यङ्गुलविस्तृता तृतीया मेखला कार्य्या। तेन तिसृणामपि मेखलानामुच्छ्रायविस्तारौ समानौ भवतः। उच्छ्राये विस्तारे च प्रथमा चतुरङ्गुला, द्वितीया त्र्यङ्गुला, तृतीया द्व्यङ्गुलेति। सर्वथापि नवाङ्गुल एवोच्छ्रायो विस्तारश्चोपपद्यते। तदुक्तं क्रियासारे—

प्रधानमेखलोत्सेधमुक्तमत्र नवाङ्गुलम्।
तद्बाह्ये मेखलोत्सेधं पञ्चाङ्गुलमिति स्मृतम्॥ १॥
तद्बाह्यमेखलोत्सेधमङ्गुलद्वितयं क्रमात्।
चतुस्त्रिद्व्यङ्गुलव्यासा मेखला त्रितयस्य तु॥ २ इति॥

तदिदं कुण्डरत्नाकरोक्तं मतान्तरं द्रष्टव्यम्॥

परे त्वाहुः—क्षेत्रस्य द्वादशभागैः प्रथमायाः, अष्टभागैर्द्वितीयायाः, चतुर्भिर्भागैस्तृतीयाया उत्सेधः कार्य्य इति॥

प्रथमा मेखला तत्र द्वादशाङ्गुलविस्तृता।
चतुर्भिरङ्गुलैस्तस्याश्चोन्नतिश्च समन्ततः॥ १॥
तस्याश्चोपरिवप्रः स्याच्चतुरङ्गुलमुन्नतः।
अष्टाभिरङ्गुलैः सम्यग् विस्तीर्णस्तु समन्ततः॥ २॥
तस्योपरि पुनः कार्य्यो वप्रः सोपि तृतीयकः।
चतुरङ्गुलविस्तीर्णश्चोन्नतश्च तथा विधिः॥ ३॥

इति वसिष्ठसंहितोक्तेः॥





अत्र भागः क्षेत्रस्य चतुर्विंशोंऽशः। तेनैकहस्ते कुण्डे एकाङ्गुलो, द्विहस्ते द्व्यङ्गुलस्त्रिहस्ते त्र्यङ्गुल इत्येवं दशहस्तपर्य्यन्तमूह्यम्॥ विधानपारिजाते त्वेवं पठ्यते—

कुण्डे द्विहस्ते तास्ताः स्युस्तर्काब्धिगुणसंमिताः । ( ६ । ४ । ३ )
कुण्डे त्रिहस्ते ता ज्ञेया मुनिभूतगुणाङ्गुलाः ॥ १ ॥ ( ७ । ५ । ३ )
अब्धिहस्ते तु कुण्डे ता नागतर्कयुगाङ्गुलाः । ( ८ । ६ । ४ )
कुण्डे पञ्चकरे नन्दसप्तभूताङ्गुलैः स्मृताः ॥ २ ॥ ( ९ । ७ । ५ )
ताः स्युः कुण्डे ऋतुकरे दिग्वसुषष्ठाङ्गुलान्विताः । ( १० । ८ । ८ )
कुण्डे सप्तकरे द्वयंशनवसप्ताङ्गुलामताः ॥ ३ ॥ ( १२ । ९ । ७ )
कुण्डे वसुकरे ताः स्युर्भानुपङ्क्तयष्टकाङ्गुलाः । ( १२ । १० । ८ )
कुण्डे नवकरे विश्वरुद्रनन्दाङ्गुलाः स्मृताः ॥ ४ ॥ ( १३ । ११ । ९ )
दिग्घस्तप्रमिते कुण्डे मनुभानुदशाङ्गुलाः । ( १४ । १२ । १० )
उत्सेधायामतो ज्ञेया मेखलाः सर्वतो बुधैः ॥ ५ ॥ इति ॥

तदित्थं त्रिमेखलापक्षेऽपि मतत्रयमाख्यातम् ॥ २ अथ केचित् पञ्चमेखला इच्छन्ति । तासां च प्रथमादीनां क्रमेण षडङ्गुलः, पञ्चाङ्गुलश्चतुरङ्गुलस्त्र्यङ्गुलो द्व्यङ्गुलश्च विस्तारो विधीयते । तेन पञ्चमेखलाविस्तारात् कण्ठतो वहिर्भागे विंशत्यङ्गुलस्थलावगाहो भवति । उच्छ्रायस्त्वासां प्रथमाया नवांशैर्द्वितीयायाः पञ्चमभागोनैर्नवांशैस्तृतीयायाः पञ्चमभागद्वयोनैर्नवांशैश्चतुर्थ्याः पंचमभागत्रयोनैर्नवांशैः, पंचम्यास्तु पंचमभागचतुष्टयोनैर्नवांशैः कार्य्यः । तथा चैकहस्ते कुण्डे प्रथमा नवाङ्गुला ( ९ ) द्वितीया सपादसप्ताङ्गुला ( ७ ) तृतीया सार्द्धपञ्चाङ्गुला ( ५॥ ) चतुर्थी पादोनचतुरङ्गुला ( ३॥। ) पञ्चमी तु द्व्यङ्गुलोत्सेधा ( २ ) संपद्यते । अत्रोच्छ्रायः पञ्चमांशेन ह्रसति । स च पञ्चमांशः षड्यवाधिकैकाङ्गुलात्मको द्रष्टव्यः ॥ ( १ । ६ ) ॥ योन्यादिकुण्डेषु ता मेखला योन्याद्याकारा एव स्युः ॥



## अथ योनिः ।

सा पृष्ठमेखलाया मध्यभागेऽश्वत्थपत्राकृतिर्गजोष्ठाकृतिर्वा क्रियते। घृतरक्षणार्थमन्तर्बिला सा पश्चादुन्नता पुरस्तात्त्वग्रे नता कार्य्या। कूर्म्मपृष्ठवन्मध्योन्नता कार्य्येत्येके। कुण्डव्यासार्द्धेन दीर्घा, व्यासत्र्यंशेन विस्तृता, चतुर्विंशांशेन तून्नता योनिश्चतुर्विंशांशमानेनैव चाग्रेणाधोमुखेन कुण्डमध्ये प्रविष्टा क्रियते। तेनैकहस्ते कुण्डे द्वादशाङ्गुलायता अष्टाङ्गुलविस्तृता, एकाङ्गुलोत्सेधा, एकाङ्गुलाग्रेण चाधोमुखेनकुण्डस्यान्तर्विशती संपाद्यते। एषापि समन्तान्मेखलया चतुर्विंशांशमितया युज्यते। एकाङ्गुलमेखला सापेक्षैवास्या द्व्यङ्गुलोन्नतिरुक्ता विधानपारिजाते–

मेखलामध्यतो योनिः कुण्डार्द्धात् त्र्यंशविस्तृता ।
उन्नतिर्द्व्यङ्गुलेनास्याः कुण्डोष्ठी बोधिपत्रवत् ॥ इति ॥

अग्रस्तात्तु सा द्वाभ्यां वृत्तार्द्धाभ्यां गजकुम्भाकाराभ्यां युज्यते।

कुम्भद्वयसमायुक्तं मध्ये त्वाज्यधृतिस्तथा ।
अग्रेण कुण्डाभिमुखी किञ्चिदुत्सृष्टमेखला ॥

इति विधानपारिजातोक्तेः ॥ यत्तु योन्याः पश्चिमपार्श्वद्वयसंलग्नदेशे नालस्योभयपार्श्वयोः कुम्भद्वयं कुम्भद्वयाकारं वा मृत्पिण्डद्वयं स्थाप्यमिति केचिदाहुस्तद्शास्त्रीयम् । त्रिकोणपश्चिमभुजाग्रःसंलग्नयोरर्द्धचन्द्रयोरेवेह कुम्भशब्देन व्यपदेश्यत्वात् ॥ यत्तु—

योनिमध्यगतं लिङ्गं तुङ्गं पृथुकराङ्गुलम् ।
मृत्पिण्डद्वितयं तस्याः पार्श्वयोः कुम्भिकुम्भवत् ॥

इति स्पष्टमेव पिण्डद्वयस्थापनं विधानपारिजातादिषु विधीयते । तदेकदेशीयत्वादनादेयम्। योनिशब्दार्थभ्रान्त्या तत्राण्डकोशादिसन्निधानकरणस्य सोपधिकतया निरर्थकत्वात् ॥

केचित्तु सा नालनितम्बयुक्ता क्रियते। तत्र योनिपश्चिमभुजे द्व्यङ्गुलविस्तृतेन कर्कटकेनास्या नितम्बो भवति। स च त्रिकोणपश्चिमभुजाग्रः कृतयोर्गजकुंभाकारयोरर्द्धचन्द्रयोरेव संज्ञाविशेषात्मको न तु ततोऽन्यः कश्चिदर्थः। यत्तु पूर्वोक्तार्द्धच-

*ग्रावधस्तान्नालस्योभयतः पुनरपरं क्षुद्रमर्द्धचन्द्रद्वयं नितम्बशब्दवाच्यं मृत्तिकया निर्माययन्ति तदज्ञानात्। एकस्यैवार्थस्यार्द्धचन्द्रशब्देन कुम्भशब्देन नितम्बशब्देन श्रोणिशब्देन च विवक्षितत्वात्, पदार्थान्तरत्वे प्रमाणाभावात् ॥ नालं तु भूतलमारभ्य श्रोण्योरन्तरा योनिमूलपर्य्यन्तं दीर्घं सच्छिद्रमर्द्धचन्द्रवत् संपद्यते ॥ तत्रेदं सच्छिद्रत्वं द्वेधा प्रतिपद्यन्त। नालविशेषणतयेत्येके, क्रियाविशेषणतयेत्येके। तत्र नालस्य स्वतएव सरन्ध्रस्वरूपतया तद्विशेषणं व्यर्थं स्यात्। तस्मात् क्रियाविशेषणमेतत्। मध्यमेखलायां परिधि धारणार्थं सरन्ध्ररूपेण नालसंनिवेशस्यावश्यकत्वात्। परिधिधारणातिरिक्तं तु स्थलं सर्वं परिपूरणीयम् ॥ परिधिर्मेखलान्तः। नालस्य मानमुक्तं प्रयोगसारे—

"योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम्।
त्रिद्व्येकाङ्गुलविस्तारं क्रमान्न्यूनाग्रमिष्यते ॥ इति ॥

तेन चतुरङ्गुलदीर्घमादौ त्र्यङ्गुलेन मध्ये द्व्यङ्गुलेन योनिनितम्बमध्ये त्वेकाङ्गुलेन विस्तृतं कार्य्यम्। शारदातिलकेऽप्याह।
दक्षपश्चिमतो नालमायामे चतुरङ्गुलम्।
विधाय रन्ध्रं मध्यस्थमेखलोपरि शोभनम् ॥ " इति ॥

पूर्वदक्षिणकुण्डयोर्दक्षिणतस्तदितरेषु तु कुण्डेषु पश्चिमतो नालं कुर्य्यादिति व्यवस्था नेया। विधानपारिजाते तु नालस्थानमाह—

"अङ्घिसंख्याङ्गुलोपेतामुच्छ्राया यामतः समाम्।
वेदिं विधाय तस्यां तु न्यस्तनालं विधानवित् ॥
शेषं प्रपूरयेदन्तः परिधिस्थापनाय च। " इति ॥

होतुरग्रे तु योनिरिति शारदोक्तेः कुण्डस्य पश्चाद्भागेऽवस्थितस्य प्राङ्मुखस्य होतुरग्रे प्राङ्मुखी योनि रुदङ्मुखस्य तु होतुरग्रे योनिरुदङ्मुखी क्रियते। यद्दिश्यायां मेखलायामियं योनिर्भवति स कुण्डस्य पश्चाद्भागः स्यात्, तद्विरुद्धदिश्या च मेखला कुण्डस्याग्रभागः स्यात्। अतएव कुण्डाग्रभागप्रतिपत्त्यर्थं योनिविधाने दिङ् नियमः क्रियते। पूर्वाग्नेयदक्षिणादिश्येषु कुण्डेषु पूर्वैशान्यन्तरालकुण्डे पञ्चकुण्ड्याः पञ्चमे कुण्डे च कुण्डस्योत्तरमुखत्वविधानाय दक्षिणदिश्याया मेखलायां

उपरि सा योनिरुत्तरदिङ्मुखी निवेश्यते । इतरेषु तु पंचसु कुण्डेषु कुण्डस्य प्राङ्मुखत्वविधानाय पश्चिममेखलोपरि सा प्राङ्मुखी क्रियते । तदुक्तं त्रैलोक्यसारे-

"दक्षिणस्था पूर्वयाग्ये जलस्था पश्चिमोत्तरे ।
नवमस्यापि कुण्डस्य योनिर्दक्षदलस्थिता ॥" इति ॥

नवमेऽपि कुण्डे पश्चिमदिशि प्राङ्मुखी योनिरित्याह कुण्डप्रदीपकारः ॥ तन्नावकल्पते । यथा वेदीपृष्ठतः कृता न भवति, होता च प्राङ्मुख उदङ्मुखो वोपविशति, यथा च ब्रह्माद्युपवेशनस्थानमवशिष्यते तथैव विधातुमौचित्यमिति कुण्डरत्नाकरोक्तन्यायेन नवमे दक्षिणत एव योनेरौचित्यात् । सेयं योनिर्मेखलावत् प्रतिकुण्डं विधीयते । योनिकुण्डे तु योनिं कुर्य्याद्वा न कुर्य्याद्वेति मतद्वयम् । तत्र प्रतिषेधे बहूनां पक्षपातः ॥ द्विहस्तादि-कुण्डवृद्धौ व्यवस्थामाह विधानपारिजातादौ—

एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत् ॥ इति ॥

तदित्थं स्थानमानक्षेत्रखातनाभिकण्ठमेखलायोनिरूपाणिअष्टाङ्गानि कुण्डस्य व्याख्यातानि । तैरुपेता एव सर्वे कुण्डा निर्म्माय प्रयोगे नेयाः । तद्व्यतिक्रमे दोषस्मरणात् ॥ तथा चोक्तम्—

"खातेऽधिके भवेद्रोगो हीने धेनु धनक्षयः ।
वक्रकुण्डे तु संतापो मरणं भिन्नमेखले ॥ १ ॥
मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः ।
भार्य्याविनाशनं प्रोक्तं कुण्डे योन्या विना कृते ॥ २ ॥
अपत्यध्वसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम् ॥ इत्यादि ।

तस्माल्लक्षणलक्षितान्येव कुण्डानि विधेयानि । अत्र विशेषोऽप्युक्तः कुण्डरत्नाकरे—

कुण्डमत्रोक्तमार्गेण निर्म्माय सह लक्षणम् ।
क्षत्रियो वा समृद्धो वा शूद्रस्ताम्रेण बन्धयेत् ॥ १ ॥
तदभावे त्विष्टकाभिः संबध्य सुदृढं यथा ।
पूर्वोदितप्रकारेण मृदा वा लेपयेत्तथा ॥ २ ॥
ताम्रेण लक्षणोपेतं कुर्य्यान्मृत्तिकयापि वा ।
एतत्कुण्डं चरार्चायां गृह्णीयान्न स्थिरार्चने ॥ ३ ॥

अम्लेन ताम्रकुण्डं तु मृन्मयं गोमयाम्भसा ।
सौधं च सुधिया सम्यक् शोधयेदमरर्षभ ॥ ४ ॥
मृन्मयानां तु कुण्डानां परितः सन्धिभिः सह ।
रक्तमृच्छालिपिष्टाभ्यां भूषयेदाग्नियं यथा ॥ ५ ॥ इति ॥

---

## अथ कुण्डानुकल्पसाधनम् ।

कुण्डकरणाशक्तौ स्वल्पहोमे वा नित्यनैमित्तकहोमे वा कर्तव्ये हस्तमात्रविस्तृतं चतुरस्रं चतुरङ्गुलोच्छ्रितमेकाङ्गुलोच्छ्रितं वा स्थंडिलं निर्म्माय तत्र होमः कार्य्यः ।

"कुण्डाभावे तु होमार्थं स्थंडिलं पीठमेव वा ।
होमार्थे स्थंडिलं पीठं कार्य्यमित्याह शौनकः ॥ "

इति बौधायनोक्तेः । तच्च स्थंडिलं बालुकाभिः कार्य्यं रक्तमृद्रजसो वा ।

नित्यनैमित्तिके होमे स्थंडिले वा समाचरेत् ।
हस्तमात्रेण तत्कुर्य्याद्वालुकाभिस्तु शोभनम् ॥
अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्तत इति शारदोक्तेः ।
स्थंडिलं वालुकाभिर्वा रक्तमृद्रजसोऽपि वा । इति क्रियासारोक्तेश्च ।

आहुतितारतम्यानुरोधेन तदुच्छ्रायमानं शुल्वकारिकायामुक्तम् । पञ्चाशद्धोमे सदेकाङ्गुलेन, शताहुतौ द्व्यङ्गुलमानेन, सहस्रहोमे चतुरङ्गुलैः, अयुतहोमेऽष्टाङ्गुलैः, लक्षहोमे षोडशाङ्गुलैः, प्रयुतहोमे विंशत्यङ्गुलैः, कोटिहोमे पञ्चविंशत्यङ्गुलैरुन्नतं स्थंडिलं कुर्य्यात् । नातोऽधिकमुन्नतं कुर्य्यात् । तेनाधिकहोमेऽपि पञ्चविंशत्यङ्गुलोच्छ्रितमेवेदं स्थंडिलमिष्यते । स्थण्डिलेऽपि मेखलायोन्यादयः कुण्डवदेव संपाद्याः ।

"कुण्डवन्मेखलां कृत्वा योनिं कृत्वा ततः परम् ।
बौधायनमते प्रोक्तं स्थंडिलं चतुरस्रकम् ॥ "

इति बौधायनोक्तेः । स्थंडिलाभावे तु पीठे होमः कार्य्यः । तत्र योनिमेखलाभावः । तच्च पीठं स्थंडिलमानतो ज्ञेयमुच्छ्राये द्वादशाङ्गुलं स्यात् ।

*सर्वविघ्नोपसर्गविनाशनाय विधीयमाने विनायकस्नानादौ कर्मविशेषे* चत्वारि पीठानि कार्य्याणीत्युक्तं कुण्डप्रदीपे । तत्रादौ षडशीत्यङ्गुलैश्चतुरस्रां समकर्णां

वेदीं निर्माय तत्रेशानकोणे पूर्वोत्तररज्जुसंसक्तमूलं चतुरस्रं समकर्णं ग्रहपीठं विदध्यात्। तच्च द्विहस्तं क्रियते। इति कुण्डोक्तरीत्या त्रयस्त्रिंशदङ्गुलैः सप्तयवैश्चतसृभिर्यूकाभिरस्य भुजाः संपाद्याः। एवं वायव्यकोणे पश्चिमोत्तररज्जुसंसक्तमूलं चतुरस्रं समकर्णं भद्रपीठं नाम स्नानपीठं निदध्यात्। तदपि द्विहस्तं कार्य्यमिति ग्रहपीठवदेवास्य भुजाः संपाद्यन्ते। अथाग्नेयकोणे भद्रपीठस्य समकर्णतया दुर्गापीठं विरच्यते। तच्च पञ्चाङ्गुलानि पूर्वतः पञ्चाङ्गुलान्येव दक्षिणतो वेदीप्रदेशं त्यक्त्वा चतुर्विंशत्यङ्गुलं कुर्य्यात्। त्रीण्यप्येतानि पीठानि द्वादशाङ्गुलैरुच्छ्रितानि स्युः। ततो नैर्ऋतकोणे ग्रहपीठसमकर्णतया वह्निपीठं रचयेत्। तदपि दक्षिणतस्त्र्यङ्गुलं पश्चिमतोऽपि त्र्यङ्गुलं वेदीभागं त्यक्त्वाऽष्टाविंशत्यङ्गुलैरायतविस्तीर्णं चतुरङ्गुलोच्चं समचतुरस्रं विधीयते। एतद्धोमपीठं विद्यात्। चतुर्णां कर्णसूत्रे समतया भवतः न्यासो यथा—



अत्र गणितं कुण्डप्रदीपे निरूपितं यथा—भद्रपीठदुर्गापीठान्तरं द्वात्रिंशच्च पञ्च चेति। ( ३२ । ५ ) ॥ दुर्गापीठहोमपीठान्तरं षड्विंशतिः ( २६ ) ॥ ग्रहपीठदुर्गापीठान्तरं त्रयोविंशतिश्च शून्यं च तिस्रश्चेति ( २३ । ० । ३ ) ॥ भद्रपीठहोमपीठान्तरमेकविंशतिश्च शून्यं च तिस्रश्चेति ( २१ । ० । ३ ) ॥ ग्रहपीठभद्रपीठान्तरं त्वष्टादश च शून्यं च षट् चेति ( १८ । ० । ६ ) ॥ षडशीति वर्गः । षण्णवत्यधिकानि त्रिसप्ततिशतानि ( ७३९६ ) ॥ स द्विघ्नश्चतुर्दशसहस्राणि सप्तशतानि द्वानवत्यधिकानि ( १४७९२ ) तस्य मूलमेकविंशं शतं पञ्चोत्तरं स्यात्। ( १२१ । ५ ) अयं वेदीकर्णः स्यात्॥ ग्रहपीठे कर्णोऽष्टचत्वारिंशत् (४८) होमपीठे कर्णस्तु नचत्वारिंशच्च चतुष्कं चेति ॥ होमपीठान्नैर्ऋतकोणकर्णश्चत्वारश्च द्वौ चेति( ४ । २ )। एषां संयोगस्त्वेकनवतिश्च पञ्च चेति । वेदीकर्णाच्छोधिते शेषं त्रिंशत् ( ३० ) एतदेव ग्रहपीठहोमपीठान्तरं वसिष्ठेनोक्तम्—

ग्रहहोमान्तरं कर्णे त्रिंशदङ्गुलसंमितम् । इति ॥

एवं भद्रपीठे कर्णोऽष्टचत्वारिंशत्। दुर्गापीठे कर्णस्त्रयस्त्रिंशच्च सप्त च चतस्रश्चेति । दुर्गापीठादाग्नेयकोणे कर्णः सप्त चैकं चेति। एषां संयोगो नवाशीतिश्च पञ्च चेति। वेदीकरणाच्छोधिते शेषं भद्रपीठदुर्गापीठान्तरं स्यात्। द्वात्रिंशच्च पञ्च चेति। एवमेवान्यत्राप्यूह्यम् ॥

स्थंडिलपीठयोरप्यभावे लोहपात्रे वा नूतनमृन्मयपात्रे वा हवनं कार्यम् ।

"अथाग्निकार्य्यं वक्ष्यामि कुण्डे वा स्थंडिलेऽपि वा ।
वेद्यां वाप्यायसे पात्रे मृन्मये वा नवे शुभे ॥"

इति वायवीय संहितोक्तेः ॥ इति कुण्डानुकल्पसाधनम्

---

कुण्डप्रकाशिका, कुण्डमार्तण्डः, कुण्डकौमुदी ।
कुण्डरत्नाकरः, कुण्डप्रदीपः, कुण्डदर्पणः ॥ १ ॥
कुण्डोद्योतः, कुण्डतत्त्वप्रदीपः कुण्डकारिका ।
कुण्डोदधिः कुण्डसिद्धिः कुण्डार्कः कुण्डभास्करः ॥ २ ॥
कुण्डकल्पद्रुमः कुण्डरचना कुण्डपद्धतिः ।
कुण्डार्णवः कुण्डविधिः कुण्डश्रीः कुण्डनारदः ॥ ३ ॥

कुण्डाङ्कुशोऽथ कुण्डांशुमालाथो कुण्डनिर्णयः ।
स्वायंभुवं पञ्चरात्रं कुण्डलक्षणसंग्रहः ॥ ४ ॥
वैश्वम्भरं वास्तुशास्त्रं प्रतिष्ठासारसंग्रहः ॥
बौधायनं नारदीयं हेमाद्रिर्गणितागमः ॥ ५ ॥
तत्वचिन्तामणिः सार तरङ्गिण्यात्मवल्लभः ।
विधानपारिजातं च शारदातिलकादिकम् ॥ ६ ॥
ज्ञानरत्नावली शुल्वसूत्रार्थः शुल्वकारिका ।
पुराणानि च सर्वाणि तन्त्राम्नाय रहस्यकम् ॥ ७ ॥
एतेष्वेवोदितं कुण्डविधानमिह दर्शितम् ।
तेनैष भगवान् यज्ञपुरुषः सुप्रसीदतु ॥ ८ ॥
मधुसूदनकृत्युक्ते श्रीयज्ञमधुसूदने ॥
स्मार्तकुण्डसमीक्षाख्यो द्वितीयोऽध्याय ईरितः ॥ ६ ॥

इति यज्ञमधुसूदनस्य द्वितीयः कुण्डसमीक्षाभिधः
स्मार्तकुण्डाध्यायः समाप्तः ।

